तेभ्योऽभवन् गणधरा जयकीर्तिसूरि-
मुख्यास्ततश्च जयकेसरिसूरिराजः ।
सिद्धांतसागरगणाधिभुवस्ततोऽनु
श्रीभावसागरगुरूरुगुणा अभूवन् ॥ ११ ॥

तद्वंशपुष्करविभासनभानुरूपाः
सूरीश्वराः सुगुण[शे]वधयो बभूवुः ॥ षट्पदी ॥

तत्पट्टोदयशैलशृंगकिरणाः शास्त्रांबुधेः पारगा
भव्यस्वांतचकोरलासनलसत्पूर्णाभचंद्राननाः ।
श्रीमंतो विधिपक्षग[च्छ]तिलका वादींद्रपंचानना
आसन् श्रीगुरुधर्म्ममूर्तिगुरवः सूरींद्रवंद्यांह्रयः ॥ १२ ॥

तत्पट्टेऽथ जयंति मन्मथभटाहंकारशर्व्वोपमाः
श्रीकल्याणसमुद्रसूरिगुरवः कल्याणकंदांबुदाः ।
भव्यांभोजविबोधनैककिरणाः सद्ज्ञानपाथोधयः
श्रीमंतोऽत्र जयंति सूरिविभुभिः सेव्याः प्रभावोद्यताः ॥१३॥

श्रीश्रीमालज्ञातीय मंत्रीश्वरश्रीभंडारी तत्पुत्र महं श्रीअमरसी सुत महं श्रीकरण तत्पुत्र सा श्रीधन्ना तत्पुत्र साह श्रीसोपा तत्पुत्र सा० श्रीवंत तद्भार्या उभयकुलानंददायिनी बाई श्रीसोभागदे तत्कुक्षिसरोराजहंस साह श्रीरूप तद्भगिनी उभयकुलानंददायिनी परमश्राविका हीरबाई पुत्र पारीक्ष श्रीसोमचं[द्र]प्रभृतिपरिकरयुतया। संवत् १६८३ वर्षे माघ सुदि त्रयोदशी तिथौ सोमवासरे [ श्री ] चंद्रप्रभस्वामिजिनमंदिरजीर्णोद्धारः कारितः। श्रीराजनगरवास्तव्य महं भंडारी प्रसाद कराविउ हुतु तेहनइ वठी पेढी[इं] बाई श्री-हीरबाई हुई तेणीइ प..........( हिलउ ? ) उद्धार कराविउ ॥

संघसहित ९९ वार यात्रा कीधी । स्वसुरपक्षे पारिष श्रीगंगदास भार्या बाई गुरदे पुत्र पारिष श्रीकुंयरजी भार्या बाई कमलयदे कुक्षिसरोराजहंसोपमौ पारिषश्रीवीरजीपारिषश्रीरहीयाभिधानौ । पारिष वीरजी भार्या बाई हीरादे पुत्र पं॰ सोमचंद्रस्तन्नाम्ना श्री-चंद्रप्रभस्वामिजिनबिंबं कारितं प्रतिष्ठितं च देशाधीश्वरस्वभापतपन-प्रभोद्भासिताखिलभूमण्डल.................................श्रीकांधुजी तत्पुत्र राज्य श्रीशिवाजी.........................श्राविका श्रीहीरबाई पुत्री बाई कीई बाइ कल्याणी भ्राता पारिष रूपजी तत्पुत्र पारिष गुडीदासयुतेन ॥ संवत् १६८२ वर्षे माह शुदि त्रयोदसी सोमवासरे श्रीचंद्रप्रभ-स्वामिप्रतिष्ठा कारिता ॥ भट्टारकश्रीकल्याणसागरसूरिभिः प्रति-ष्ठितं ॥ वाचकश्रीदेवसागरगणीनां कृतिरियं ॥ पंडितश्रीविजय-मूर्तिगणिनाऽलेखि ॥ पं॰ श्रीविनयशेषरगणीनां शिष्य मु॰ श्री-रविशेषरगणिना लिखितिरियम् ॥ श्रीशेत्रुंजयनमः यावत् चंद्रार्कं चिरं नंदतात् श्रीकवडयक्षप्रसादात् ॥ गजधररामजी लघुभ्राता-कुअ.........णेजरतनकल्यणकृतायां अत्र भद्रम् ॥

( एपिग्राफिआ इण्डिका-२।६८-७१ )

( २८ )

ॐ ॥ सं॰ १[६]८४ माघ वदि ५ शुक्रे श्रीमत्पत्तनवास्तव्य श्रीमालज्ञातीय ठ॰ जसपालपौत्रेण पितृ ठ० राजा मातृ ठ० सी[वुश्रेयोऽर्थं] ठ० धाधाकेन श्रीआदिनाथबिंबं खत्तकसहितं कारितं ॥

( एपिग्राफिआ इण्डिका-२।७२ ).

( २९ )

॥ ॐ ॥ संवत् १६८६ वर्षे चैत्रे शुदि १५ दिने दक्षण-
देशे देवगीरीनगरवास्तव्य श्रीमालीज्ञातीय लघुशाषीय तुकजी-
भार्या बा० तेजलदे सुत सा० हासुजी भार्या बाई हासलदे
लघुभ्राता सा० वछुजी सा० देवजी भार्या बाई चछादे देराणी
बाई देवलदे पुत्र सा० धर्मदास भगिनी बा० कुअरी प्रमुखस-
मस्तकुटंब श्रीविमलाचलनी यात्रा करीनि श्रीअदबुदआ.........
(दिनाथ ?)प्रासादनो मंडपनो कोटसहीत फरी उद्धार कराव्यु....
..................द्धारक[श्री]..............................[राज्ये] तत्पट्टालं-
कारे [ श्री ]...................................[ श्री ]..................
[भ्यः] ॥ पंडितोत्तम श्रीद्ध................मुपदेशात् शुभं भवतु ॥

( एपिग्राफिआ इण्डिका-२।७२ )

( ३० )

ॐ ॥ भट्टारकपुरंदरभट्टारकश्रीहीरविजयसूरिभ्यो नमो
नमः । तत्पट्टप्रभाकरभट्टारकश्रीविजयसेनसूरिगुरुभ्योनमः ।
संवत् १६९६ वर्षे वैशाख शुदि ५ रवौ श्रीदीवबंदिरवास्तव्य
संघवी सचा भार्या बाई तेजबाई तयोः सुपुत्र संघवी गोविंदजी
भार्या बाई वयजबाई प्रमुखकुटंबयुतेन स्वश्रेयसे श्रीशत्रुंजये
उत्तुंगप्रासादः कारापितः श्रीपार्श्वनाथबिंबं स्थापितं प्रतिष्ठितं च
श्रीतपागछनायकभट्टारक श्रीविजयदेवसूरिभिः तत्पट्टालंकारयुव-
राज श्रीविजयसिंहसूरिश्चिरं जीवतु ॥

( एपिग्राफिआ इण्डिका-२।७२ )

( ३१ )

ॐ ॥ ॐ नमः ॥

प्रत्यतिष्ठिपदिदं खलु तीर्थं रायसिंह इह वर्द्धमानभूः ।
शासनाद्विजयदेवगुरोः सद्वाचकेन विनयाद्विजयेन ॥ १ ॥
श्रीविजयसिंहसूरिः स जयतु तपगच्छमौलिमाणिक्यम् ।
अजनिष्ट यदुपदेशात् सहस्रकूटाभिधं तीर्थम् ॥ २ ॥
दिक्शशिजलधिमितेब्दे १७१०
सितषष्ठ्यां ज्येष्ठमासि तीर्थेऽस्मिन् ।
अर्हद्बिंबसहस्रं स्थापितमष्टोत्तरं वंदे ॥ ३ ॥
यावज्जयति सुमेरुस्तावज्जीयात्प्रकृष्टसौभाग्यः ।
श्रीशत्रुंजयमूर्ध्न्दिन सहस्रकूटः किरीटोयम् ॥ ४ ॥

( एपिग्राफिआ इण्डिका-२।७३ )

( ३२ )

अर्हम् ॥ ॐ ॥ स्वस्ति श्रीसंवत् १७१० वर्षे ज्येष्ठ शुक्ल-षष्ठीतिथौ गुरुवारे श्रीउग्रसेनपुरवास्तव्यउकेशज्ञातीयवृद्धशाखीय-कुहाडगोत्र सा० वर्द्धमान भा०वाल्हादे पु० समानसिंह रायसिंह कनकसिंह उग्रसेन ऋषभदासैः सा०जगत्‌सिंह जीवणदास प्रमु-खपरिवारयुतैः स्वपितृवचनात्तत्पुण्यार्थं श्रीसहस्रकूटतीर्थं कारितं स्वप्रतिष्ठायां प्रतिष्ठापितं। तपागच्छे भ०श्रीहीरविजयसूरिपट्टप्रभाक-रभ०श्रीविजयसेनसूरिपट्टालंकारपातिशाहिश्रीजिहांगीरप्रदत्तमहा-तपाबिरुधधारिअनेकराजाधिराजप्रतिबोधकारिभट्टारक श्री७ श्री-विजयदेवसूरीश्वरआचार्य श्रीविजयप्रभसूरिनिर्देशात् श्रीहीरविज-यसूरिशिष्यरत्नमहोपाध्याय श्री५ कीर्तिविजयग० शिष्योपाध्याय

श्रीविनयविजयगणिभिः प्रतिष्ठितं ॥ श्रीरस्तु ॥ श्रीशत्रुंजयमहातीर्थकार्यकरपंडित श्री५ शांतिविजयग० देवविजयग० मेघविजयग० साहाय्यतः सिद्धमिदम् ॥ सूत्रधार मनजीः ॥

( एपिग्राफिआ इण्डिका-२।७३ )

( ३२ )

॥ श्री ॥ ॐ नमः ॥

बभूवुः श्रीमहावीरपट्टानुक्रमभूषणाः ।
श्रीअंचलगणाधिशाः आर्यरक्षितसूरयः ॥ १ ॥
तत्पट्टपंकजादित्याः सूरिश्रीजयसिंहकाः ।
श्रीधर्मघोषसूरींद्रा महेंद्रसिंहसूरयः ॥ २ ॥
श्रीसिंहप्रभसूरीशाः सूरयो जिनसिंहकाः ।
श्रीमद्देवेंद्रसूरीशाः श्रीधर्मप्रभसूरयः ॥ ३ ॥
श्रीसिंहतिलकाह्वाश्च श्रीमहेंद्रप्रभाभिधाः ।
श्रीमंतो मेरुतुंगाख्याः बभूवुः सूरयस्ततः ॥ ४ ॥
समग्रगुणसंपूर्णाः सूरिश्रीविजयकीर्त्तयः ।
तत्पट्टेऽथ सुसाधुश्रीजयकेशरसूरयः ॥ ५ ॥
श्रीसिद्धांतसमुद्राख्याः सूरयो भूरिकीर्तयः ।
भावसागरसूरींद्रास्ततोऽभूवन् गणाधिपाः ॥ ६ ॥
श्रीमद्गुणनिधानाख्याः सूरयस्तत्पदेऽभवन् ।
युगप्रधानाः श्रीमंतः सूरिश्रीधर्म्ममूर्त्तयः ॥ ७ ॥
तत्पट्टोदयशैलाग्रप्रोद्यत्तरणिसन्निभाः ।
अभवन्सूरिराजश्रीयुजः कल्याणसागराः ॥ ८ ॥
श्रीअमरोदधिसूरींद्रास्ततो विद्यासूरयः ।

उदयार्णवसूरिश्च कीर्तिसिंधुमुनिपतिः ॥ ९ ॥
ततः पुण्योदधिसूरिराजेंद्रार्णवसूरयः ।
मुक्तिसागरसूरींद्रा बभूवुः गुणशालिनः ॥ १० ॥
ततो रत्नोदधिसूरिर्जयति विचरन्भुवि ।
शांतदांतक्षमायुक्तो भव्यान् धर्म्मोपदेशकः ॥ ११ ॥

॥ इति पट्टावलिः ॥

अथ कच्छसुराष्ट्रे च कोठारानगरे वरे ।
बभूवुर्लघुशाखायामर्णसीति गुणोज्वलः ॥ १२ ॥
तत्पुत्रो नायको जज्ञे हीरबाई च तत्प्रिया ।
पुत्रः केशवजी तस्य रूपवान्पुण्यमूर्तयः ॥ १३ ॥
मातुलेन समं मुंबैबंदरे तिलकोपमे ।
अगात्पुण्यप्रभावेन बहु स्वं समुपार्जितं ॥ १४ ॥
देवभक्तिर्गुरुरागी धर्मश्रद्धाविवेकिनः ।
दाता भोक्ता यशः कीर्त्ति स्ववर्गे विश्रुतो बहु ॥ १५ ॥
पाबेति तस्य पत्नी च नरसिंहः सुतोऽजनि ।
रत्नबाई तस्य भार्या पतिभक्तिसुशीलवान् (?) ॥ १६ ॥
केशवजीकस्य भार्या द्वितीया मांकबाइ च ।
नाम्ना त्रीकमजी तस्य पुत्रोऽभूत् स्वल्पजीविनः ॥ १७ ॥
नरसिंहस्य पुत्रोऽभूत् रूपवान् सुंदराकृतिः ।
चिरं जय सदा ऋद्धिर्वृद्धिर्भवतु धर्मतः ॥ १८ ॥

॥ इति वंशावलिः ॥

गांधी मोहोतागोत्रे सा केसवजी निजभुजोपार्जितवित्तेन धर्मकार्याणि कुरुते स्म। तद्यथा निजपरिकरयुक्तो संघसार्द्धं विमला-

द्रितीर्थे समेत्य कच्छसौराष्ट्रगूर्ज्जरमरुधरमेवाडकुंकुणादिदेशादागता बहुसंघलोकाः मिलिताः अंजनशलाकाप्रतिष्ठादिमहोत्सवार्थं विशालमंडपं कारयति स्म । तन्मध्ये नवीनजिनबिंबानां रुप्यपाषाणधातूनां बहुसहस्रसंख्यानां सुमुहूर्ते सुलग्ने पीठोपरि संस्थाप्य तस्य विधिना क्रियाकरणार्थं श्रीरत्नसागरसूरिविधिपक्षगच्छपतेरादेशतः मुनिश्रीदेवचंद्रगणिना तथा क्रियाकुशलश्राद्धैः सह शास्त्रोक्तरित्या शुद्धक्रियां कुर्वन् श्रीवीरविक्रमार्कतः संवत् १९२१ ना वर्षे तस्मिन् श्रीशालिवाहनभूपालकृते शाके १७८६ प्रवर्तमान्ये मासोत्तमश्रीमाघमासे शुक्लपक्षे तिथौ सप्तम्यां गुरुवासरे मार्तंडोदयवेलायां सुमुहूर्त्ते सुलग्ने स्वर्णशलाकया जिनमुद्राणां श्रीगुरुभिश्च साधुभिरंजनक्रियां कुरुते स्म । संघलोकान् सुवेषधारीन् बहुऋध्या गीतगानवादित्रपूर्वकं समेत्य जिनपूजनलोंछनादिक्रियायाचकानां दानादिसंघवात्सल्यादिभक्तिर्हर्षतश्चक्रे । पुनः धर्मशालायां आरासोपलानिर्मितं सास्वतऋषभादिजिनानां चतुर्मुखं चैत्यं पुनः गिरिशिखरोपरि श्रीअभिनंदनजिनस्य विशालमंदिरं तस्य प्रतिष्ठा माघसित त्रयोदश्यां बुधवासरे शास्त्रोक्तविधिना क्रिया कृता श्रीरत्नसागरसूरीणामुपदेशतः श्रीसंघपति निजपरिवारेण सह श्रीअभिनंदनादिजिनाबिंब[ानि] स्थापिता[नि] ततः गुरुभक्तिसंघभक्ति शक्तयानुसारेण कृतः गोहिलवंशविभुषणठाकोर श्रीसूरसंघजीराज्ये पादलिप्तपुरे मदनोत्सवमभूत् श्रीसंघस्य भद्रं भूयात् कल्याणमस्तु ॥ शुभं भवतु ॥

माणिक्यसिंधुवरमुख्यमुनिवरेषु
तच्छिष्यवाचकवरविनयार्णवेन ।
एषा प्रशस्तिः श्रवणामृततुल्यरूपा

संघस्य शाशनसमुन्नतिकार्यलेखि ॥ १ ॥
वाचकविनयसागरेणेयं प्रशस्तिर्लिखिता ॥
यावन्मेरुर्महीधरो यावच्चंद्रदिवाकरौ ।
यावत्तीर्थं जिनेंद्राणां तावन्नदंतु मंदिरं ॥ १ ॥
॥ श्रीरस्तु ॥

(एपिग्राफिआ इण्डिका-२।७४-७७)

( ३३ )

॥ ॐ ॥ सं० १६५० [प्र०] चै० पूर्णिमायां सुविहितसाधुक्षीरसागरप्रोल्लासशीतपादानां निजवचनरंजितसाहि श्रीअकब्बरप्रदत्तश्रीसिद्धशैलानां भट्टारकश्रीविजयसेनसूरिप्रमुखसुविहितभाक्तिभरसेव्यमानपादारविंदानां श्री६ श्रीहीरविजयसूरिपादानां माहात्म्यप्रीणितसाहिनिर्मितसकलसत्वद्रव्यग्रहण [ मु ]क्तिकायां प्रथमचैत्रपूर्णिमायां तच्छिष्यसकलवाचककोटिकोटीरशतकोटिश्री६श्रीविमलहर्षगणिभिः । श्रे० पं० देवहर्षग० श्रीशत्रुंजय० कृतकृत्य पं० धनविजयग० पं० जयविजयग० जसविजय-हंसविजयग० मुनि-[वे]सलादिमुनिशतद्वयपरिकरितैर्निर्विघ्नीकृता यात्रा इति भद्रम् ॥

( एपिग्राफिआ इण्डिका-२।८६ )



( ३४ )

॥ र्द० ॥ संवत् १३७१ वर्षे माहसुदि १४ सोमे श्रीमदूकेशवंशे वेशट्गोत्रीय सा० सलषण पुत्र सा० आजडतनय सा० गोसल भार्या गुणमती कुक्षिसंभवेन संघपति आसाधरानु-

जेन सा० लूणसीहाग्रजेन संघपति साधुश्रीदेसलेन पुत्र सा० सहजपाल सा० साहणपाल सा० सामंत सा० समरा सा० सांगण प्रमुख कुटुंबसमुदायोपेतेन निजकुलदेवी श्रीचंडिका (?) मूर्तिः कारिता ।

यावद् व्योम्नि चंद्रार्कौ यावन्मेरुर्महीतले ।
तावत् श्रीचंडिका (?) मूर्तिः.........................॥

( प्राचीनगूर्ज्जरकाव्यसंग्रह )

( ३५ )

संवत् १३७१ वर्षे माह सुदि १४ सोमे श्रीमदुकेशवंशे वेसट्गोत्रे सा० सलषणपुत्र सा० आजडतनय सा० गोसल भार्या गुणमती कुक्षिसमुत्पन्नेन संघपति सा० आसाधरानुजेन सा० लूणसीहाग्रजेन संघपति साधु श्रीदेसलेन सा० सहजपाल सा० साहणपाल सा० सामंत सा० समरसीह सा० सांगण सा० सोम प्रभृतिकुटुंबसमुदायोपेतेन वृद्धभ्रातृ संघपति आसाधरमूर्तिः श्रेष्ठिमाठ(ढ?)लपुत्री संघ०रत्नश्रीमूर्तिसमन्विता कारिता ॥ आशाधरकल्पतरु...................................युगादिदेवं प्रणमति ॥

( प्राचीनगूर्ज्जरकाव्यसंग्रह )

( ३६ )

संवत् १३७१ वर्षे माहसुदि १४ सोमे..........................

..........................................................................

राणक श्रीमहीपालदेवमूर्तिः संघपति श्रीदेसलेन कारिता श्रीयुगादिदेवचैत्ये ॥

( प्राचीनगूर्ज्जरकाव्यसंग्रह )

( ३७ )

संवत १४१४ वर्षे वैशाख सुदि १० गुरौ संघपति देसलसुत सा० समरा-समरश्रीयुग्मं सा० सालिग सा० सज्जनसिंहाभ्यां कारितं प्रतिष्ठितं श्रीककसूरिशिष्यैः श्रीदेवगुप्तसूरिभिः। शुभं भवतु।

( प्राचीनगूर्जरकाव्यसंग्रह )



# श्रीगिरनारपर्वतस्थाः प्रशस्तिलेखाः ।



## गूर्जरमहामात्यवस्तुपाल-तेजःपालकारितश्रीनेमिनाथ-प्रासादगताः षड् बृहत्प्रशस्तयः ।



( ३८-१ )

नमः श्रीसर्वज्ञाय ।

पायान्नेमिजिनः स यस्य कथितः स्वामीकृतागस्थिता-
वग्रे रूपदिदृक्षया स्थितवते प्रीते सुराणां प्रभौ ।
काये भागवते वनेवक····द्विपोलावने शंसता-
मिदशां(?)····मपि········वनाजवे····················॥ १ ॥

स्वस्ति श्रीविक्रमसंवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदणहिलपुर(*)वास्तव्यप्राग्वाटान्वयप्रसूतठ० श्रीचंडपात्मजठ० श्रीचंडप्रसादांगजठ० श्रीसोमतनुजठ० श्री।आशाराजनंदनस्य ठ० श्रीकुमारदेवीकुक्षिसंभूतस्य ठ० श्रीलुणिग महं० श्रीमालदेवयोरनुजस्य महं० श्रीतेजःपालाग्रजन्मनो महामात्य श्रीवस्तुपालस्यात्मजे महं० श्रीललितादेवीकुक्षिसरो(*)वरराजहंसायमाने महं० श्रीजयतसिंहे सं. ७९ वर्षपूर्वं स्तंभतीर्थमुद्राव्यापारान् व्यापृण्वति सति सं. ७७ वर्षे श्रीशत्रुंजयोज्जयंतप्रभृतिमहातीर्थयात्रोत्सवप्रभावाविर्भूत-श्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन चौलुक्यकुलनभस्तल-

☞ (*) एतच्चिह्नं शिलापट्टस्थपङ्क्तिसूचकम् ।

प्रकाशनैकमार्त्तंडमहाराजाधिराजश्रीलवणप्रसाददेवसु(*)तमहाराज श्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्य्येण श्रीशारदाप्रतिपन्ना-पत्येन महामात्यश्रीवस्तुपालेन तथा अनुजेन सं. ७६ वर्षपूर्वं गूर्जरमंडले धवलक्ककप्रमुखनगरेषु मुद्राव्यापारान् व्यापृण्वता महं० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीमद-णहिलपुरभृगुपुर(*)स्तंभनकपुरस्तंभतीर्थदर्भवतीधवलक्ककप्रमुखन-गरेषु तथा अन्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजीर्णोद्धाराश्च कारिताः ॥ तथा सचिवेश्वरश्रीवस्तुपालेन इह स्वयं निर्मापितश्रीशत्रुंजयमहातीर्थावतारश्रीमदादितीर्थंकरश्री-ऋषभदेव स्तंभनकपुरावतारश्रीपार्श्वनाथदेव सत्यपु(*)रावतार श्री-महावीरदेव प्रशस्तिसहितकश्मीरावतार श्रीसरस्वतीमूर्ति देवकुलि-काचतुष्टयजिनयुगल अम्बावलोकनाशाम्बप्रद्युम्नशिखरेषु श्रीनेमि-नाथदेवालंकृतदेवकुलिकाचतुष्टय तुरगाधिरूढस्वपितामहमहं० ठ० श्रीसोम निजपितृठ० श्रीआशराजमूर्तिद्वितयचारुतोरणत्रय श्रीने-मिनाथ(*)देव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्त्तिसमन्वितसुखो-द्घाटनकस्तंभश्रीअष्टापदमहातीर्थप्रभृति अनेककीर्तनपरंपराविरा-जिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयंतमहातीर्थे आत्मन-स्तथा स्वधर्मचारिण्याः प्राग्वाटजातीयठ० श्रीकान्हडपुत्र्याः ठ० राणूकुक्षिसंभूताया महं० श्रीललितादेव्याः(*)पुण्याभिवृद्धये श्रीना-गेंद्रगच्छे भट्टारक श्रीमहेंद्रसूरिसंताने शिष्यश्रीशांतिसूरि शिष्यश्री-आणंदसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालंकरणप्र-भुश्रीविजयसेनसूरिप्रतिष्ठितश्रीअजितनाथदेवादिविंशतितीर्थंकरा-लंकृतोऽयमभिनवः समंडपः श्रीसम्मेतमहातीर्थावतारप्रासादः कारितः ॥ (*)

पीयूषपूरस्य च वस्तुपाल-
मंत्रीशितुश्चायमियान् विभेदः ।
एकः पुनर्जीवयति प्रमीतं
प्रमीयमाणं तु भुवि द्वितीयः ॥ १ ॥

श्रीदश्रीदयितेश्वरप्रभृतयः संतु क्वचित् तेऽपि ये
प्रीणंति प्रभविष्णवोऽपि विभवैर्नाकिंचनं कंचन ।
सोऽयं सिंचति कांचनैः प्रतिदिनं दारिद्र्यदावानल-
प्रम्लानां पृथिवीं नवीनजलदः श्रीवस्तुपालः (*)पुनः॥२॥

भ्रातः पातकिनां किमत्र कथया दुर्मंत्रिणामेतया
येषां चेतसि नास्ति किंचिदपरं लोकोपकारं विना ।
नन्वस्यैव गुणान्गृणीहि गणशः श्रीवस्तुपालस्य य-
स्तद्विश्वोपकृतिव्रतं चरति यत्कर्णेन चीर्णं पुरा ॥३॥

भित्त्वा भानुं भोजराजे प्रयाते
श्रीमुंजेऽपि स्वर्गसाम्राज्यभाजि ।
एकः संप्रत्यर्थिनां वस्तुपाल-
स्तिष्ठत्यश्रु(*)स्यंदनिष्कंदनाय ॥ ४ ॥

चौलुक्यक्षितिपालमौलिसचिव ! त्वत्कीर्त्तिकोलाहल-
स्त्रैलोक्येऽपि विलोक्यमानपुलकानंदाश्रुभिः श्रूयते ।
किं चैषा कलिदूषितापि भवता प्रासादवापीप्रपा-
कूपारामसरोवरप्रभृतिभिर्धात्री पवित्रीकृता ॥ ५ ॥

स श्रीतेजःपालः सचिवश्चिरकालमस्तु तेजस्वी ।
येन वयं निश्चिंताश्चिंतामणिने(*)व नंदामः ॥ ६ ॥

लवणप्रसादपुत्रश्रीकरणे लवणसिंहजनकोऽसौ ।
मंत्रित्वमत्र कुरुतां कल्पशतं कल्पतरुकल्पः ॥ ७ ॥

पुरा पादेन दैत्यारेर्भुवनोपरिवर्त्तिना ।
अधुना वस्तुपालस्य हस्तेनाधः कृतो बलिः ॥ ८ ॥
दयिता ललितादेवी तनयमत्रीतनयमाप सचिवेंद्रात् ॥
नाम्ना जयंतसिंहं जयंतमिन्द्रात्पुलोमपुत्रीव ॥ ९ ॥(*)

[एते] श्रीगूर्जरेश्वरपुरोहितठ० श्रीसोमेश्वरदेवस्य ॥
स्तंभतीर्थेऽत्र कायस्थवंशे वाजडनंदनः ।
प्रशस्तिमेतामलिखत् जैत्रसिंहध्रुवः सुधीः ॥ १ ॥
वाहडस्य तनूजेन सूत्रधारेण धीमता ।
एषा कुमारसिंहेन समुत्कीर्णा प्रयत्नतः ॥ २ ॥
श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादत ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिशालिनी ॥ ३ ॥

( गिरनार इन्स्क्रिप्शन्स् नं. २।२१-२३ )

( ३९-२ )

............यः पु....तयदुकूलक्षीरार्णवेन्दुर्जिनो
यत्पादाब्जपवित्रमौलिरसभश्रीरुज्जयन्तोऽप्ययम् ॥
धत्ते मूर्ध्नि निजप्रभुप्रसृमरोद्दामप्रभामण्डलो
विश्वक्षोणिभृदाधिपत्यपदवीं नीलातपत्रोज्ज्वलाम् ॥१॥

स्वस्ति श्रीविक्रमसंवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदणाहिल(*)पुरवास्तव्य प्राग्वाटान्वयप्रसूतठ० श्रीचण्डपालात्मजठ० श्रीचण्डप्रसादाङ्गजठ० श्रीसोमतनुजठ० श्रीआशाराजनन्दनस्य ठ० श्रीकुमारदेवीकुक्षिसंभूतस्य ठ० श्रीलुणिगमहं० ठ० श्रीमालदेवयोरनुजस्य महं० ठ० श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे महं० ठ० श्रीललितादेवी(*)कुक्षिसरोवरराजहंसायमाने

महं० श्रीजयन्तासिंहे सं० ७९ वर्षपूर्वं मुद्राव्यापारं व्यापृण्वति सति सं० ७७ वर्षे श्रीशत्रुंजयोज्जयन्तप्रभृतिमहातीर्थयात्रोत्सव-प्रभावाविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन चौलुक्य-कुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधिराजश्रीलवण ( * ) प्र-साददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वेश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथाऽनुजेन सं० ७६ वर्षपूर्वं गूर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारान् व्यापृण्वता महं० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलप्रभृतिमहा-तीर्थेषु(*) श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीध-वलक्कप्रमुखनगरेषु तथाऽन्यसमस्तथानेष्वपि कोटिशोऽभिनवधर्म-स्थानानि प्रभूतजीर्णोद्धाराश्च कारिताः । तथा सचिवेश्वरश्रीवस्तु-पालेनेह स्वयं निर्मापितश्रीशत्रुंजयमहातीर्थावतारश्रीमदादितीर्थं-करश्रीऋषभदेव(*) स्तम्भनकपुरावतारश्रीपार्श्वनाथदेव सत्यपुरा-वतारश्रीमहावीरदेव प्रशस्तिसहितकश्मीरावतारश्रीसरस्वतीमूर्ति-देवकुलिकाचतुष्टय जिनद्वयाम्बावलोकनाशाम्बप्रद्युम्नशिखरेषु श्री-नेमिनाथदेवालंकृतदेवकुलिकाचतुष्टयतुरगाधिरूढनिजापितामहठ० श्रीसोमनिजपितृ ठ० श्रीआशाराज(*)मूर्तिद्वितयचारुतोरणत्रयश्री-नेमिनाथदेव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्तिसमन्वितसुखोद्घा-टनकस्तम्भश्रीअष्टापदमहातीर्थप्रभृतिअनेककीर्तनपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहातीर्थे आत्मनस्त-था स्वभार्यायाः प्राग्वाटज्ञातीयठ० श्रीकान्हडपुत्र्याः ठ०(*)राणुकु-क्षिसंभूताया महं० श्रीसोखुकायाः पुण्याभिवृद्धये श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसन्ताने शिष्यश्रीशान्तिसूरि शिष्यश्रीआन-न्दसूरि श्रीअमरसूरिपदेभट्टारक श्रीहरिभद्रसूरि पट्टालंकरण श्री-

विजयसेनसूरिप्रतिष्ठित श्रीऋषभदेवप्रमुखचतुर्विंशतितीर्थंकरालंकृतोऽयमभिनवः समण्ड(*)पः श्रीसंमेतमहातीर्थावतारप्रधानप्रासादः कारितः ।

चेतः किं कलिकालसालसमहो किं मोहनो हस्यते
तृष्णे कृष्णमुखासि किं कथय किं विघ्नौघमोघो भवान् ।
ब्रूमः किंतु सखे न खेलति किमप्यस्माकमुज्जृम्भितं
सैन्यं यत्किल वस्तुपालकृतिना धर्मस्य संवर्धितम् ॥ १ ॥

यं विधुं बन्धवः सिद्धमर्थिनः शत्र(*)............ ।
............ण....पश्यन्ति वर्ण्यतां किमयं मया ॥ २ ॥

वैरं विभूतिभारत्योः प्रभुत्वप्रणिपातयोः ।
तेजस्विताप्रशमयोः शमितं येन मन्त्रिणा ॥ ३ ॥

दीपः स्फूर्जति सज्जकज्जलमलस्नेहं मुहुः संहर-
न्निन्दुर्मण्डलवृत्तखण्डनपरः प्रद्वेष्टि मित्रोदयम् ।
शूरः क्रूरतरः परस्य सहते तेजो न तेजस्विन-
स्तत्केन प्रतिमं ब्र(*)वीमि सचिवं श्रीवस्तुपालाभिधम् ॥४॥

आयाताः कति नैव यान्ति कतिनो यास्यन्ति नो वा कति
स्थाने स्थाननिवासिनो भवपथे पान्थीभवन्तो जनाः ।
अस्मिन्विस्मयनीयबुद्धिजलधिर्विश्वस्य दस्यून् करे
कुर्वन्पुण्यनिधिं धिनोति वसुधां श्रीवस्तुपालः परम् ॥ ५ ॥

दध्रेऽस्य वीरधवलक्षितिपस्य राज्य-
भारे धुरंधरधुरा(*)...................... ।
श्रीतेजपालसचिवे दधति स्वबन्धु-
भारोद्धृतावविधुरैकधुरीणभावम् ॥ ६ ॥

इह तेजपालसचिवो विमलितविमलाचलेन्द्रममृतभृतम् ।
कृत्वाऽनुपमसरोवरममरगणं प्रीणयांचक्रे ॥ ७ ॥

एते श्रीमलधारिश्रीनरचन्द्रसुरीणाम् ॥

इह वालिगसुतसहजिगपुत्रातकतनुजवाजडतनूजः ।
अलि(*)खदिमां कायस्थस्तम्भपुरीयध्रुवो जयन्तसिंहः ॥

हरिमण्डपनन्दीश्वरशिल्पीश्वरसोमदेवपौत्रेण ।
बकुलस्वामिसुतेनोत्कीर्णा पुरुषोत्तमेनेयम् ॥
श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादतः
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्ति शालिनी ॥

महामात्यश्री वस्तुपालस्य प्रशस्तिरियं ६०३ महामात्यवस्तुपालभार्यामहं श्रीसोखुकाया धर्मस्थानमिदम् ॥

( गिरनार इन्स्क्रिप्शन्स् नं० २।२३-२४ )

( ४०-३ )

॥ ॐ नमः सर्वज्ञाय ॥

प्रणमदमरमेङ्क्मौलिस्फुरन्माणिधोरणी-
तरुणकिरणश्रेणीशोणीकृताखिलविग्रहः ॥
सुरपतिकरोन्मुक्तैः स्नात्रोदकैर्घुसृणारुण-
प्रुततनुरिवापायात्पायाज्जगन्ति शिवाङ्गजः ॥

स्वस्ति श्रीविक्रमसंवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदणहिलपुरवास्तव्य प्रा(*)ग्वाटान्वयप्रसूत ठ० श्रीचण्डपालात्मज ठ० श्रीचण्डप्रसादाङ्गज ठ० श्रीसोमतनुज ठ० श्रीआशाराजनन्दनस्य ठ० श्रीकुमारदेवीकुक्षिसंभूतस्य ठ० श्रीलुणिगमहं० श्री-

मालदेवयोरनुजस्य महं० श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तु-
पालस्यात्मजे महं० श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने(*)
महं० श्रीजयन्तसिंहे सं० ७९ वर्षपूर्वं स्तम्भनकतीर्थमुद्राव्यापारं
व्यापृण्वति सति सं० ७७ वर्षे श्रीशत्रुंजयोज्जयन्तप्रभृतिमहातीर्थया-
त्रोत्सवप्रभाविताविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन
चौलुक्यकुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधिराजश्रीलवणप्र-
साददेवसुतमहाराजश्रीवीरधव(*)लदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण
श्रीशारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथाऽनुजेन सं०
७६ वर्षपूर्वं गूर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारान्व्या-
पृण्वता महं० श्रीतेजःपालेन च शत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु
श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधव(*)लक्क-
कप्रमुखनगरेषु तथाऽन्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्था-
नानिप्रभूतजीर्णोद्धाराश्च कारिताः। तथा सचिवेश्वर श्रीवस्तुपाले-
नेह स्वयं निर्मापितश्रीशत्रुंजयमहातीर्थावतारश्रीमदादितीर्थकरश्री-
ऋषभदेव स्तम्भनकपुरावतारश्रीपार्श्वनाथदेव श्रीसत्यपुरावतार-
श्रीमहावीरदेव(*)प्रशस्तिसहितकाश्मीरावतारश्रीसरस्वतीमूर्ति देव-
कुलिकाचतुष्टयजिनयुगलाम्बावलोकनाशाम्बप्रद्युम्नाशिखरेषु श्रीने-
मिनाथदेवालंकृतदेवकुलिकाचतुष्टयतुरगाधिरूढनिजपितामह ठ०
श्रीसोम स्वपितृठ० श्रीआशाराजमूर्तिद्वितय कुंजराधिरूढमहामात्य-
श्रीवस्तुपालानुज महं० श्रीतेजःपालमूर्तिद्वय चारुतोरणत्रयश्रीनेमि-
नाथदेव आत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्तिसमन्वित सुखोद्घाटनक-
स्तम्भश्रीसंमेतमहातीर्थ प्रभृतिअनेकतीर्थपरम्पराविराजिते श्रीनेमि-
नाथदेवाधिदेवविभूषितश्रीमदुज्जयन्तमहातीर्थे आत्मनस्तथा स्वभा-
र्यायाश्च प्राग्वाटजातीय ठ० श्रीकान्हडपुत्र्याः ठ०(*)राणुकुक्षिसंभूता-

या महं० श्रीसोखुकायाः पुण्याभिवृद्धये श्रीनागेन्द्रगच्छे भट्टारक-श्रीमहेन्द्रसूरिसंताने शिष्यश्रीशान्तिसूरिशिष्यश्रीआणन्दसूरि श्रीअ-मरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालंकरणप्रभुश्रीविजयसेनसूरि-प्रतिष्ठितऋषभदेवालंकृतोऽयमभिनवः समण्डपः श्रीअष्टापदमहाती-र्थावतारनिरुपमप्रधानप्रासादः कारितः ॥

प्रासादैर्गगनाङ्गणप्रणयिभिः पातालमूलंकषैः
कासारैश्च सितैः सिताम्बरगृहैर्नीलैश्च लीलावनैः।
येनेयं नयनिर्जितेन्द्रसचिवेनालंकृतालं क्षितिः
क्षेमैकायतनां चिरायुरुदयी श्रीवस्तुपालोऽस्तु सः ॥ १ ॥
संदिष्टं तव वस्तुपालबलिना विश्वत्रयीयात्रिका-
न्मत्वा ना(*)रदतश्चरित्रमिति ते हृष्टोऽस्मि नन्द्याश्चिरम्।
नार्थिभ्यः कुधमार्थितः प्रथयसि स्वल्पं न दत्से न च
स्वश्लाघां बहु मन्यसे किमपरं न श्रीमदान्मुह्यसि ॥ २ ॥

अरिबलदलनश्रीवीरनामायमुर्व्यां
सुरपतिरवतीर्णस्तर्कयामस्तदस्य।
निवसति सुरशाखी वस्तुपालाभिधानः
सुरगुरुरपि तेजःपालसंज्ञः समीपे ॥ ३ ॥

उदारः शूरो वा(*) रुचिरवचनो वाऽस्ति न हि वा
भवत्तुल्यः कोऽपि क्वचिदिति चुलुक्येन्द्रसचिव !।
समुद्भूतभ्रान्तिर्नियतमवगन्तुं तव यश-
स्ततिर्गेहे गेहे पुरि पुरि च याता दिशि दिशि ॥ ४ ॥
सा कुत्रापि युगत्रयी बत गता सृष्टा च सृष्टिः सतां
सीदत्साधुरसंचरत्सुचरितः खेलत्खलोऽभूत्कलिः।
तद्विश्वार्तिनिवर्तनैकमनसा प्रत्तोऽधुना शं(*)भुना

प्रस्तावस्तव वस्तुपाल भवते यद्रोचते तत्कुरु ॥ ५ ॥
के निधाय वसुधातले धनं वस्तुपाल न यमालयं गताः ।
त्वं तु नन्दसि निवेशयन्निदं दिक्षु धावति जने क्षुधावति ॥६॥
पौत्रेण धारय वराहपते धरित्रीं
सूर्य प्रकाशय सदा जलदाभिषिञ्च ।
विश्राणितेन परिपालय वस्तुपाल
भारं भवत्सु यदिमं निदधे विधा(*)ता ॥ ७ ॥
आत्मा त्वं जगतः सदागतिरियं कीर्तिर्मुखं पुष्करं
मैत्री मन्त्रिवरः स्थिरा घनरसः श्लोकस्तमोघ्नः शमः ।
नोक्तः केन करस्तवामृतकरः कायश्च भास्वानिति
स्पष्टं धूर्जटिमूर्तयः कृतपदाः श्रीवस्तुपाल त्वयि ॥ ८ ॥
विद्या यद्यपि वैदिकी न लभते सौभाग्यमेषा क्वचि-
न्न स्मार्तं कुरुते च कश्चन वचः कर्णद्वये य(*)द्यपि ।
राजानः कृपणाश्च यद्यपि गृहे यद्यप्ययं च व्यय-
श्चिन्ता कापि तथापि तिष्ठति न मे श्रीवस्तुपाले सति ॥९॥
कर्णे खलप्रलपितं न करोषि रोषं
नाविष्करोषि न करोष्यपदे च लोभम् ।
तेनोपरि त्वमवनेरपि वर्तमानः
श्रीवस्तुपाल कलिकालमधः करोषि ॥ १० ॥
सर्वत्र भ्रान्तिमती सर्वविदस्त्वदभवत्कथं कीर्तिः ।(*)
श्रीवस्तुपालपैतृकमनुहरते सन्ततिः प्रायः ॥ ११ ॥
सोऽपि बलेरवलेपः स्वल्पतरोऽभूत्तथैव कल्पतरोः ।
श्रीवस्तुपालसचिवे सिञ्चति दानामृतैर्जगतीम् ॥ १२ ॥

---

१–०पितृकमनुहर्त्ते संप्रति०–इति प्राचीनलेखमालायाम् ।

नियोगिनागेषु नरेश्वराणां भद्रस्वभावः खलु वस्तुपालः ।
उद्दामदानप्रसरस्य यस्य विभाव्यते क्वापि न मत्तभावः ॥१३॥
विबुधैः पयोधिमध्यादेको बहु(*)भिः करीन्दुरुपलब्धः ।
बहवस्तु वस्तुपाल प्राप्ता विबुध त्वयैकेन ॥ १४ ॥
प्रथमं धनप्रवाहैर्वाहैरथ नाथमात्मनः सचिवः ।
अधुना तु सुकृतसिन्धुः सिन्धुरवृन्दैः प्रमोदयति ॥ १५ ॥
श्रीवस्तुपाल भवता जलधेर्गम्भीरता किलाकलिता ।
आनीय ततो गजता स्वपतिद्वारे यदाकलिता ॥ १६ ॥

एते श्रीमद्गुर्जरेश्वरपुरोहि(*)तठ० श्रीसोमेश्वरदेवस्य ॥

इह वालिगसुतसहजिगपुत्रानकतनुजवाजडतनूजः ।
अलिखदिमां कायस्थः स्तम्भपुरीयध्रुवो जयतसिंहः ॥
हरिमण्डपनन्दीश्वरशिल्पीश्वरसोमदेवपौत्रेण ।
बकुलस्वामिसुतेनोत्कीर्णा पुरुषोत्तमेनेयम् ॥

महामात्यश्रीवस्तुपालस्य प्रशस्तिरियं निष्पन्ना ६०३ ।

श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादतः ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिशालिनी ॥

महामात्यवस्तुपालभार्या महं० श्रीसोखुकाया धर्मस्थानमिदम् ॥

( गिरनार इन्स्क्रिप्शन्स् नं. २।२४-२५ )



( ४१-४ )

ॐ नमः श्रीनेमिनाथदेवाय ॥

तीर्थेशाः प्रणतेन्द्रसंहतिशिरः कोटीरकोटिस्फुट-
त्तेजोजालजलप्रवाहलहरीप्रक्षालितांघ्रिद्वयः ।
ते वः केवलमूर्तयः कवलितारिष्टां विशिष्टाममी
तामष्टापदशैलमौलिमणयो विश्राणयन्तु श्रियम् ॥ १ ॥

स्वस्ति श्रीविक्रसंवत् १२८८ वर्षे फागुण (*) शुदि १० बुधे श्रीमदणहिलपुरवास्तव्य प्राग्वाटान्वयप्रसूतठ० श्रीचण्डपालात्मज श्रीचण्डप्रसादाङ्गज ठ० श्रीसोमतनुज ठ० श्रीआशाराजनन्दनस्य ठ० श्रीकुमारदेवीकुक्षिसंभूतस्य ठ० श्रीलुणिग महं० श्रीमालदेव-योरनुजस्य ठ० महं० श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपाल-स्यात्मजे(*) महं० श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने महं० श्रीजयन्तासिंहे सं० ७९ वर्षे पूर्वं स्तम्भतीर्थवेलाकुलमुद्राव्यापारं व्यापृण्वति सति सं० ७७ वर्षे श्रीशत्रुंजयोज्जयंतप्रभृतिमहातीर्थयात्रो-त्सवप्रभावाविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन चौलु-क्यकुलनभस्तलप्रकाशनैक(*)मार्तण्डमहाराजाधिराजश्रीलवणप्रसा-ददेवसुतमहाराजश्रीवीरधवलदेवप्रीतिप्रातिपन्नराज्यसर्वैश्वर्येण श्री-शारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथानुजेन सं० ७६ वर्षे पूर्वं गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारं व्यापृण्वता महं० श्रीतेजःपालेन च श्री(*)शत्रुंजयार्बुदाचलमहातीर्थेषु श्रीमदण-हिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथान्यसमस्तस्थानेष्वपि कोटिशो धर्मस्थानानि प्रभूतजीर्णोद्धारा-श्च कारिताः । तथा सचिवेश्वरश्रीवस्तुपालनेह स्वयं निर्मापितशत्रुं-

जयमहातीर्थाव(*)तारश्रीमदादितीर्थंकरश्रीऋषभदेव स्थ(स्त)म्भन-
कपुरावतारश्रीपार्श्वनाथदेव सत्यपुरावतारश्रीमहावीरदेव प्रशस्ति-
सहितकश्मीरावतारश्रीसरस्वती देवकुलिकाचतुष्टय युगलाम्बाव-
लोकनशाम्बप्रद्युम्नशिखरेषु श्रीनेमिनाथकुलालंकृतदेवकुलिकाचतु-
ष्टयतुरगाधिरूढनि(*)जपितामह ठ०श्रीसोम पितृ ठ०श्रीआशाराजमू-
र्तिद्वितयतोरणत्रयश्रीनेमिनाथदेवआत्मीयपूर्वजाग्रजानुजपुत्रादिमू-
र्तिसमन्वितसुखोद्घाटनकस्तम्भश्रीसंमेतावतारमहातीर्थप्रभृतिअने-
ककीर्तनपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदु-
ज्जयन्तमहातीर्थे आ(*)त्मनस्तथा स्वभार्यायाः प्राग्वाटजातीय ठ०
कान्हडपुत्र्याः ठ० राणुकुक्षिसंभूताया महं०श्रीसोखुकायाः पुण्याभि-
वृद्धये श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसंताने शिष्यश्रीशान्ति-
सूरिशिष्यआणन्दसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टा-
लंकरणश्रीविजयसेनसूरिप्रतिष्ठि(*)तश्रीमदादिजिनराजश्रीऋषभदे-
वप्रमुखचतुर्विंशतितीर्थंकरालंकृतोऽयमभिनवः समण्डपः श्रीअष्टाप-
दमहातीर्थावतारप्रधानप्रासादः कारितः ।

स्वस्ति श्रीबलये नमोऽस्तु नितरां कर्णाय दाने ययो-
रस्पष्टेऽपि दृशां यशः कियदिदं वन्ध्यास्तदेताः प्रजाः ।
दृष्टे संप्रति वस्तुपालसचिवत्यागे करिष्यन्ति ताः
कीर्तिं कांचन या पुनः स्फुटमियं विश्वेऽपि नो मास्यति ॥१॥
कोटीरैः कटकाङ्गुलीयतिलकैः केयूरहारादिभिः
कौशेयैश्च विभूष्यमाणवपुषो यत्पाणिविश्राणितैः ।
विद्वांसो गृहमागताः प्रणयिनीरप्रत्यभिज्ञाभृत-
स्तैस्तैः स्वांशपथैः कथं कथमिव प्रत्याययांचक्रिरे ॥२॥
न्यासं व्यातनुतां विरोचनसुत(*)स्त्यागं कवित्वश्रियं

भासव्यासपुरःसराः पृथुरघुप्रायाश्च वीरव्रतम् ।
प्रज्ञां नाकिपताकिनीगुरुरपि श्रीवस्तुपाल ध्रुवं
जानीमो न विवेकमेकमकृतोत्सेकं तु कौतस्कुतम् ॥ ३ ॥
वास्तवं वस्तुपालस्य वेत्ति कश्चरिताद्भुतम् ? ।
यस्य दानमविश्रान्तमर्थिष्वपि रिपुष्वपि ॥ ४ ॥

स्तोतव्यः खलु वस्तुपालसचिवः कैर्नाम वाग्वैभवै-
र्यस्य(*) त्यागविधिर्विधूय विविधां दारिद्र्यमुद्रां हठात् ।
विश्वेऽस्मिन्नखिलेऽप्ययमूत्रयदसावर्थीति दातेति च
द्वौ शब्दावभिधेयवस्तुविरहव्याहन्यमानस्थिती ॥ ५ ॥

आद्येनाप्यपवर्जनेन जनितार्थित्वप्रमाथान्पुनः
स्तोकं दत्तमिति क्रमान्तरगतानाह्वाययन्नर्थिनः ।
पूर्वस्माद्गुणसंख्ययापि गुणितं यस्तेष्वनावर्तिषु
द्रव्यं(*) दातुमुदस्तहस्तकमलस्तस्थौ चिरं दुःस्थितः ॥६॥

विश्वेऽस्मिन्किल पङ्कपङ्किलतले प्रस्थानवीथीं विना
सीदन्नेष पदे पदे न पुरतो गन्तेति संचिन्तयन् ।
धर्मस्थानशतच्छलेन विदधे धर्मस्य वर्षीयसः
संचाराय शिलाकलापपदवीं श्रीवस्तुपालस्फुटम् ॥ ७ ॥

अम्भोजेषु मरालमण्डलरुचो डिण्डीरपिण्डत्विषः
कासारेषु(*) पयोधिरोधसि लुठन्निर्णिक्तमुक्ताश्रियः ।
ज्योत्स्नाभाः कुमुदाकरेषु सदनोद्यानेषु पुष्पोल्बणाः
स्फूर्तिं कामिव वस्तुपाल कृतिनः कुर्वन्ति नो कीर्तयः ॥८॥

देव स्वर्नाथ कष्टं ननु क इव भवान्नन्दनोद्यानपालः
खेदस्तत्कोऽद्य केनाप्यहह हत हृतः काननात्कल्पवृक्षः ।
हुं मा वादीस्तदेतत्किमपि(*) करुणया मानवानां मयैव

प्रीत्यादिष्टोऽयमूर्व्यास्तिलकयति तलं वस्तुपालच्छलेन ॥९॥
श्रीमन्त्रीश्वरवस्तुपालयशसामुच्चावचैर्वीचिभिः
सर्वस्मिन्नपि लम्भिते धवलतां कल्लोलिनीमण्डले।
गाङ्गेयमिति प्रतीतिविकलास्ताम्यन्ति कामं भुवि
भ्राम्यन्तस्तनुसादमन्दितमुदो मन्दाकिनीयात्रिकाः ॥१०॥
वक्त्रं(*) निर्वासनाज्ञानयनपथगतं यस्य दारिद्र्यदस्यो-
र्दृष्टिः पीयूषवृष्टिः प्रणयिषु परितः पेतुषी सप्रसादम्।
प्रेमालापस्तु कोऽपि स्फुरदसमपरब्रह्मसंवादवेदी
नेदीयान्वस्तुपालः स खलु यदि तदा को न भाग्यैकभूमिः ॥११॥
साक्षाद्ब्रह्म परं धरागतमिव श्रेयोविवर्त्तैः सतां
तेजःपाल इति प्रसिद्धमहिमा तस्यानु(*)जन्मा जयी।
यो धत्ते न दशां कदापि कलितावद्यामविद्यामयीं
यं चोपास्य परिस्पृशन्ति कृतिनः सद्यः परां निर्वृतिम् ॥१२॥
आकृष्टे कमलाकुलस्य कुदशारम्भस्य संस्तम्भनं
वश्यत्वं जगदाशयस्य यशसामासान्तनिर्वासनम्।
मोहः शत्रुपराक्रमस्य मृतिरप्यन्यायदस्योरिति
स्वैरं षड्विधकर्मनिर्मितिमया मन्त्रोऽस्य मन्त्रीशितुः ॥ १३ ॥

(*) एते मलधारिनरेन्द्रसूरिणाम्।

स्तम्भतीर्थेऽत्र कायस्थवंशे वाजडनन्दनः।
प्रशस्तिमेतामलिखज्जैत्रसिंहध्रुवः सुधीः ॥
हरिमण्डपनन्दीश्वरशिल्पीश्वरसोमदेवपौत्रेण।
बकुलस्वामिसुतेनोत्कीर्णा पुरुषोत्तमेनेयम् ॥

श्रीवस्तुपालप्रभोः प्रशस्तिरियं निष्पन्ना॥ मङ्गलं महाश्रीः॥

( गिरनार इन्स्क्रिप्शन्स् नं. २।२६-२७ )

( ४२–५ )

ॐ नमः सर्वज्ञाय ॥

ये दुज्जयन्तं.................................जयाभूमजाकल्याणा ।

स्वस्ति श्रीविक्रमसंवत् १२८८ वर्षे फागुण शुदि १० बुधे श्रीमदणहिलपुरवा(*)स्तव्य प्राग्वाटान्वयप्रसूतठ० श्रीचण्डपालात्मज ठ०श्रीचण्डप्रसादाङ्गज ठ०श्रीसोमतनुजठ०श्रीआशाराजनन्दनस्य ठ०श्रीकुमारदेवीकुक्षिसंभूतस्य ठ०श्रीलुणिग महं०श्रीमालदेवयोरनुजस्य महं०श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे महं०श्रीललितादेवीकुक्षिसरोवरराजहंसाय(*)माने महं० श्रीजयन्तसिंहे सं० ७९ वर्षपूर्वं स्तम्भतीर्थं मुद्राव्यापारान्व्यापृण्वति सति सं. ७७ वर्षे शत्रुंजयोज्जयन्तप्रभृतिमहातीर्थयात्रोत्सवप्रसादाविर्भूतश्रीमद्देवाधिदेवप्रसादासादितसंघाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्त्तण्डमहाराजाधिराजश्रीलवणप्रसाददेवसुतमहाराजश्रीवीरध(*)वलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महामात्यश्रीवस्तुपालेन तथानुजेन सं० ७६ वर्षपूर्वं गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारं व्यापृण्वता महं० श्रीतेजःपालेन च श्रीशत्रुंजयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीमदणहिलपुरभृगुपुरस्त(*)म्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथान्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजीर्णोद्धाराश्च कारिताः । तथा सचिवेश्वरश्रीवस्तुपालेनेह स्वयं निर्मापितश्रीशत्रुंजयमहातीर्थावतारश्रीमदादितीर्थंकरश्रीऋषभदेव स्तम्भनकपुरावतारश्रीपार्श्वनाथदेव सत्यपुरावतारश्री(*)महावीरदेव प्रशस्तिसहितकश्मीरावतारश्रीस-

रस्वतीमूर्तिदेवकुलिकाचतुष्टयजिनयुगलाम्बावलोकनाशाम्बप्रद्युम्न-शिखरेषु श्रीनेमिनाथदेवालंकृतदेवकुलिकाचतुष्टयतुरगाधिरूढ-स्वपितामहमहं० श्रीसोम निजपितृठ०श्रीआशाराजमूर्तिद्वितयचा-रुतोरणत्रयश्रीनेमिनाथदेवआत्मीय( * )पूर्वजाग्रजानुजपुत्रादिमूर्ति-समन्वितसुखोद्घाटनकस्तम्भश्रीअष्टापदमहातीर्थप्रभृतिअनेककी-र्तनपरम्पराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयन्त-महातीर्थे आत्मनस्तथा स्वधर्मचारिण्याः प्राग्वाटजातीयठ० श्री-कान्हडपुत्र्याः ठ०राणुकुक्षिसंभूताया महं०श्रीललितादेव्याः पु-ण्याभि(*)वृद्धये श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसंताने शिष्य-श्रीशान्तिसूरिशिष्यश्रीआणन्दसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरि-भद्रसूरिपट्टालंकरणप्रभुश्रीविजयसेनसूरिप्रतिष्ठितश्रीअजितनाथदे-वादिविंशतितीर्थकरालंकृतोऽयमभिनवः समण्डपः श्रीसंमेतमहाती-र्थावतारप्रासादः कारितः।

स श्रीजिनाधिपतिधर्मधुराधुरीणः
श्लाघास्पदं कथमिवास्तु न वस्तुपालः।
श्रीशारदासुकृतकीर्तिनयादिवेण्याः
पुण्यः परिस्फुरति जङ्गमसङ्गमो यः॥ १॥

विभुताविक्रमविद्याविदग्धतावित्तवितरणविवेकैः।
यः सप्तभिर्विकारैः कलितोऽपि बभार न विकारम्॥२॥

यस्य भूः किमसावस्तु वस्तुपालसुतः सदा।
नावर्णासावथाप्येतौ धर्मकर्मकृतौ कृतौ॥ ३॥

कस्यापि कविता नास्ति विनास्य हृदयामुखम्।
वास्तव्यं वस्तुपालस्य पश्यामस्तद्द्वयं च यम्॥ ४॥

दुर्गः स्वर्गगिरिः सकल्पतरुभिर्भेजे न चक्षुष्पथे
तस्थौ कामगवी जगाम जलधेरन्तः स चिन्तामणिः ।
कालेऽस्मिन्नवलोक्य यस्य करुणं तिष्ठेत कोऽन्यः स्वतः
पुण्यः सोऽस्तु न वस्तुपालसुकृती दानैकवीरः कथम् ॥५॥
सोऽयं मन्त्री गुरुरतितरामुद्धरन्धर्मभारं
श्लाघाभूमिं नयति न कथं वस्तुपालः सहेलम् ।
तेजःपाल स्वबलधवलः सर्वकर्मीणबुद्धि-
र्द्वैतीयीकः कलयतितरां यस्य धौरेयकत्वम् ॥ ६ ॥
एतस्मिन्वसुधासुधाजलधरे श्रीवस्तुपाले जग-
ज्जीवातौ सितयोचयैर्नवनवैर्नक्तं दिवं वर्षति(*) ।
आस्वातन्यजनाघनोज्झितशशीज्योत्स्नाच्छवल्गद्गुणो-
द्धतैरघ..........................................॥ ७ ॥
लक्ष्मीर्मन्थाचलेन्द्रभ्रमणपरिचयादेव पारिप्लवेयं
भ्रूभृङ्गस्यैव भङ्गाच्चकितमृगदृशां प्रेमनस्थेतरस्य ।
आयुर्निश्वासवायुप्रणयपरतयैवेवमस्थैर्यदुस्थं
स्थास्नुर्धर्मोऽयमेकः परमिति हृदये(*) वस्तुपालेन मेने ॥८॥
तेजःपालस्य विष्णोश्च कः स्वरूपं निरूपयेत् ।
स्थितं जगत्रयीं पातुं यदा यो वरकन्धरे ॥ ९ ॥
ललितादेवीनाम्ना सधर्मिणी वस्तुपालस्य ।
अस्यामनिरस्तनयस्तनयोऽयं(*) जयन्तसिंहाख्यः ॥१०॥
दृष्ट्वा वपुश्च वृ.....च परस्परविरोधिनी ।
विवादा.....जैत्रसिंहस्तारुण्यवाद्रि(?)कः ॥ ११ ॥(*)

कृतिरियं मलधारिश्रीनरचन्द्रसूरीणाम् ॥

स्तम्भतीर्थेऽत्र कायस्थवंशे वाजडनन्दनः ।

प्रशस्तिमेतामालिखज्जैत्रसिंहध्रुवः सुधीः ॥
बाहडस्य तनूजेन सूत्रधारेण धीमता ।
एषा कुमारसिंहेन समुत्कीर्णा प्रयत्नतः ॥
श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादतः ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिशालिनी ॥

( गिरनार इन्स्क्रिप्शन्स् नं. २।२७-२९ )

( ४३-६ )

ॐ नमः श्रीसर्वज्ञाय ॥

संमेताद्रिशिरःकिरीटमणयः स्मेरस्मराहंकृति-
ध्वंसोल्लासितकीर्तयः शिवपुरप्राकारताराश्रियः ।
आनन्त्यश्रितसंविदादिविलसद्रत्नौघरत्नाकराः
कल्याणावलिहेतवः प्रतिकलं ते सन्तु वस्तीर्थपाः ॥ १ ॥

स्वस्ति श्रीविक्रमसंवत् १२८८ वर्षे फागुणशुदि १० बुधे श्रीमदणहिलपुरवास्तव्यप्राग्वाटकुलालङ्करण(*)श्रीचण्डपालात्मज ठ० श्रीचण्डप्रसादाङ्गज ठ० श्रीसोमतनुज ठ० श्रीआशाराजनन्दनस्य ठ० श्रीकुमारदेवीकुक्षिसम्भूतस्य ठ० श्रीलुणिग महं० श्रीमालदेवयोरनुजस्य महं० श्रीतेजःपालाग्रजन्मनो महामात्यश्रीवस्तुपालस्यात्मजे महं० श्रीललितादेवीकुक्षिसरोवरराजहंसायमाने महं० श्रीजयन्तसिंहे सं० ७९ वर्षपूर्वं स्तम्भती(*)र्थमुद्राव्यापारान् व्यापृण्वति सति सं० ७७ वर्षे श्रीशत्रुञ्जयोज्जयन्तप्रभृतिमहातीर्थयात्रोत्सवप्रभावाविर्भूत श्रीमद्देवाधिदेवप्रसादासादितसङ्घाधिपत्येन चौलुक्यकुलनभस्तलप्रकाशनैकमार्तण्डमहाराजाधिराजश्रीलवणप्रसाददेवसुतमहाराज-

श्रीवीरधवलदेवप्रीतिप्रतिपन्नराज्यसर्वैश्वर्येण श्रीशारदाप्रतिपन्नापत्येन महामा(*)त्यश्रीवस्तुपालेन तथा अनुजेन सं० ७६ वर्षपूर्वं गुर्जरमण्डले धवलक्कप्रमुखनगरेषु मुद्राव्यापारान् व्यापृण्वता महं० श्रीतेजःपालेन च श्रीशत्रुञ्जयार्बुदाचलप्रभृतिमहातीर्थेषु श्रीमदणहिलपुरभृगुपुरस्तम्भनकपुरस्तम्भतीर्थदर्भवतीधवलक्कप्रमुखनगरेषु तथा अन्यसमस्तस्थानेष्वपि कोटिशोऽभिनवधर्मस्थानानि प्रभूतजी(*)र्णोद्धाराश्च कारिताः ॥ तथा श्रीशारदाप्रतिपन्नपुत्रसचिवेश्वरश्रीवस्तुपालेन स्वधर्मचारिण्याः प्राग्वाटजातीय ठ० श्रीकान्हडपुत्र्याः ठ० राणुकुक्षिसम्भूताया महं० श्रीललितादेव्यास्तथा आत्मनः पुण्याभिवृद्धये इह स्वयं निर्मापितश्रीशत्रुञ्जयमहातीर्थावतारश्रीमदादितीर्थङ्करश्रीऋषभदेव स्तम्भनकपुरावतारश्रीपार्श्वनाथदेव सत्यपुरा(*)वतारश्रीमहावीरदेव प्रशस्तिसहितकश्मीरावतार श्रीसरस्वतीमूर्ति देवकुलिकाचतुष्टयजिनयुगल अम्बावलोकनाशाम्बप्रद्युम्नशिखरेषु श्रीनेमिनाथदेवालंकृतदेवकुलिकाचतुष्टयतुरगाधिरूढ निजपितामह महं० श्रीसोम स्वपितृ ठ० श्रीआशाराजमूर्तिद्वितयचारुतोरणत्रयश्रीनेमिनाथदेवआत्मीयपूर्वजाग्रजानुजपुत्रादिमूर्तिस(*)मन्वितसुखोद्घाटनकस्तंभश्रीअष्टापदमहातीर्थप्रभृति अनेककीर्तनपरंपराविराजिते श्रीनेमिनाथदेवाधिदेवविभूषितश्रीमदुज्जयंतमहातीर्थे श्रीनागेंद्रगच्छे भट्टारकश्रीमहेंद्रसूरिसंताने शिष्यश्रीशांतिसूरिशिष्यआणंदसूरि श्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरि पट्टालंकरणप्रभुश्रीविजयसेनसूरिप्रतिष्ठित(*) श्रीमदजितनाथदेवप्रमुखविंशतितीर्थंकरालंकृतोऽयमभिनवः समण्डपः श्रीसमेतावतारमहातीर्थप्रासादः कारितः ॥ ७ ॥

मुष्णाति प्रसभं वसुद्विजपतेर्गौरीगुरुं लङ्घय-

न्नो धत्ते परलोकतो भयमहो हंसापलापे कृती ।
उच्चैरास्तिकचक्रवालमुकुटश्रीवस्तुपालस्फुटं
भेजे नास्तिकतामयं तव यशःपूरः कुतस्त्या(*)मिति ॥१॥
कोपाटोपपरैः परैश्चलचमूरङ्गत्तुरङ्गक्षत-
क्षोणीक्षोदवशादशोषि जलधिः श्रीस्तम्भतीर्थे पुरे ।
स्वेदाम्भस्तटिनीघटाघटनया श्रीवस्तुपाल स्फुर-
त्तेजस्तिग्मगभस्तितप्ततनुभिस्तैरेव सम्पूरितः ॥ २ ॥
दिग्यात्रोत्सववीरवीरधवलक्षोणीधवाध्यासितं
प्राज्यं राज्यरथस्य भारमभितः स्कंधे दधल्लीलया ।
भाति भ्रातरि दक्षिणे समगुणे श्रीवस्तुपालः कथं
न श्लाघ्यः स्वयमश्वराजतनुजः कामं सवामा स्थितिः॥३॥
लावण्यांग इति द्युतिव्यतिकरैः सत्याभिधानोऽभवद्
भ्राता यस्य निशानिशातविकसच्चन्द्रप्रकाशाननः ।
शंके शंकरकोपसंभ्रमभरादासीदनंगः स्मरः
साक्षादंगमयोऽयमित्यपहृतः स्वर्गांगनाभिर्लघु ॥ ४ ॥
रक्तः सद्गतिभावभाजि चरणे श्रीमल्लदेवो परो
यद्भ्राता परमेष्ठिवाहनतया प्राप्तः प्रतिष्ठां पराम् ।
खेलन्निर्मलमानसे न समयं क्वापि श्रयन् पंकिलं
विश्वे राजति राजहंस इव यः संशुद्धपक्षद्वयः ॥ ५ ॥
सोऽयं तस्य सुधाहरस्य कवितानिष्ठः कनिष्ठः कृती
बंधुर्बंधुरबुद्धिबोधमधुरः श्रीवस्तुपालाभिधः ।
ज्ञानांभोरुहकोटरे भ्रमरतां सारंगसाम्यं यशः
सोमे सौरितुलां च यस्य महिमक्षीरोदधौ स्वं दधौ ॥६॥(*)
इंदुर्बिंदुरपां सुरेश्वरसरिड्डिंडीरपिंडः पति-
र्भासां विद्रुमकंदलः किल विभुः श्रीवत्सलक्ष्मानभः ।

कैलासत्रिदशेभशंभुहिमवत्प्रायास्तु मुक्ताफल-
स्तोमः कोमलवालुकास्य च यशःक्षीरोदधौ कौमुदी ॥७॥
हस्ताग्रन्यस्तसारस्वतरसरसनप्राप्तमाहात्म्यलक्ष्मी-
स्तेजःपालस्ततोऽसौ जयति वसुभरैः पूरयन् दक्षिणाशाम्।
यद्बुद्धिः कलिपभ.... ( * ) द्विपगहनपरक्षोणिभृद्बुद्धिसंप-
ल्लोपामुद्राधिपस्य स्फुरति लसदिनस्फारसंचारहेतुः ॥८॥
पुण्यश्रीर्भुवि मल्लदेवतनयोऽभूत्पुण्यसिंहो यशो-
वर्यः स्फुर्जति जैत्रसिंह इति तु श्रीवस्तुपालात्मजः ।
तेजःपालसुतस्त्वसौ विजयते लावण्यसिंहः स्वयं
यैर्विश्वे भवदेकपादपि कलौ धर्मश्चतुष्पादयम् ॥ ९ ॥

एते श्रीनागेंद्रगच्छे भट्टारकश्रीउदय(*)प्रभसूरीणाम् ।
स्तंभतीर्थेऽत्र कायस्थवंशे वाजडनंदनः ॥
प्रशस्तिमेतामलिखत् जैत्रसिंहभ्रुवः सुधीः ॥ १ ॥
बाहडस्य तनूजेन सूत्रधारेण धीमता ।
एषा कुमारसिंहेन समुत्कीर्णा प्रयत्नतः ॥ २ ॥
श्रीनेमेस्त्रिजगद्भर्तुरम्बायाश्च प्रसादतः ।
वस्तुपालान्वयस्यास्ति प्रशस्ति स्वस्तिशालिनी ॥ ३ ॥
श्रीवस्तुपालप्रभोः प्रशस्तिरियं निष्पन्ना शुभं भवतु ॥

( ४४ )

वस्तुपालविहारेण हारेणेवोज्ज्वलश्रिया ।
उपकण्ठस्थितेनायं शैलराजो विराजते ॥

श्रीविक्रम संवत् १२८९ वर्षे आश्विन वदी १५ सोमे महामात्य श्रीवस्तुपालेन आत्मश्रेयोऽर्थं पश्चाद्भागे श्रीकपर्दियक्ष-

प्रासादसमलंकृतः श्रीशत्रुंजयाव [तार] श्रीआदिनाथप्रासाद-स्तदग्रतो वामपक्षे स्वीयसद्धर्मचारिणी महं० श्रीललितादेविश्रेयोऽर्थं विंशतिजिनालंकृतः श्रीसम्मेतशिखरप्रासादस्तथा दक्षिणपक्षे द्वि० भार्या महं० श्रीसोखुश्रेयोऽर्थं चतुर्विंशतिजिनोपशोभितः श्रीअष्टा-पदप्रासादः ० अपूर्वघाटरचनारुचिरतरमभिनवप्रासादचतुष्टयं निजद्रव्येण कारयांचक्रे।

(लिष्ट ऑफ आँर्कियोलॉजिकल रिमॅन्स इन बॉम्बे प्रेसिडेन्सी पृ. ३६१)

(४५-४६)

महामात्य श्रीवस्तुपाल महं० श्रीललितादेवीमूर्ति।



महामात्य श्रीवस्तुपालमहं० श्रीसोखुकामूर्ति....।

(लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५७-८)

(४७-४८)

........पालविहारेण.............................. ॥
................................यं शैलराजो विराजते॥



........विहारेण हारेणेवोज्ज्वलश्रिया।
उपकंठस्थितेनायं शैलराजो विराजते॥

(लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५९)

(४९)

संवत् १२१५ वर्षे चैत्रशुदि ८ रवावद्येह श्रीमदुज्जयन्त-तीर्थे जगतीसमस्तदेवकुलिकासत्कछाजाकुवालिसंविरण संघवि

ठ० सालवाहण प्रतिपत्या सू० जसहडपु० सावदेवेन परिपूर्णा कृता ॥ तथा ठ० भरथसुत ठ० पंडि[त] सालिवाहणेन नागजरिसिरायापरितः कारित [ भाग ] चत्वारिबिंबीकृतकुंडकर्मांतरतदधिष्ठात्रीश्रीअंबिकादेवीप्रतिमा देवकुलिका च निष्पादिता ॥

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५६ )

( ५० )

संवत् १२२२ श्री श्रीमालज्ञातियमहं० श्रीराणिगसुत महं० श्रीआंबाकेन पद्या कारिता ।

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५९ )

( ५१ )

सं० १२२३ महं० श्रीराणिगसुत[महं] श्रीआंबाकेन पद्या कारिता ।

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५९ )

( ५२ )

श्रीमत्सूरिधनेश्वरः समभवन्नीशीरभट्टात्मजः
शिष्यस्त[ त्प ]दपंकजे मधुकरक्रिडाकरो योऽभवत् ।
[ शि ]ष्यः शोभितवेत्र नेमिसदने श्रीचन्द्रसूरि.........
श्रीमद्रेवतके चकार शुभदे कार्यं प्रतिष्ठादिकम् ॥ १ ॥
श्रीसङ्गातमहामात्यपृष्टार्थविहितोत्तरः
समुज्झूतवशादेव चण्डादिजनतान्वितः । सं. १२७६ ॥

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५५. )

( ५३ )

दं० । संवत् १३०५ वर्षे वैशाख शुदि ३ शनौ श्रीपत्तन-वास्तव्य श्रीमालज्ञातीय ठ० वाहड सुत महं० पद्मसिंह पुत्र ठ० पथिमिदेवी अंगज [ महणसिंहा ]नुज महं० श्रीसामतसिंह तथा महामात्य श्रीसलखणसिंहाभ्यां श्रीपार्श्वनाथबिम्बं पित्रोः श्रेयसेऽत्र कारितं ततो बृहद्गच्छे श्रीप्रद्युम्नसूरिपटोद्धरण श्रीमानदेवसूरि शिष्य श्रीजयानं[ द सूरिभिः ] प्रतिष्ठितं । [ शुभं भवतु ]

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५८. )

( ५४ )

संवत् १३३३ वर्षे ज्येष्ठ वदि १४ भौमे श्रीजिनप्रबोध-सूरिसुगुरूपदेशात् उच्चापुरी वास्तव्येन श्रे० आसपालसुत श्रे० हरिपालेन आत्मनः स्वमातृ हरिलायाश्च श्रेयोऽर्थं श्रीउज्जयन्त-महातीर्थे श्रीनेमिनाथदेवस्य नित्यपूजार्थं द्र० २०० शतद्वयं प्रदत्तं । अमीषां व्याजेन पुष्पसहस्र २००० द्वयेन प्रतिदिनं पूजा कर्तव्या श्रीदेवकीय आरामवाटिकासत्कपुष्पानि श्रीदेवक-..........पंचकुलेन श्रीदेवाय ऊटापनीयानि ॥

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५३ )

( ५५ )

संवत् १३३५ वर्षे वैशाख सुदि ८ गुरौ श्रीमदुज्जयन्त-महातीर्थे देव..............................च श्रीनेमिनाथपूजा-र्थं धवलक्ककवास्तव्य श्रीमालज्ञातीय संघ० वील्हणत..........

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५३ )

( ५६ )

संवत् १३३९ वर्षे ज्येष्ठ सुदि ८ बुधे श्रीउज्जयन्तमहातीर्थे अयवाणावास्तव्य प्राग्वाटज्ञातीय महं० जिसधरसुत महं० पूनसिंहभार्या गुनसिरि श्रेयोऽर्थे नेचके द्र० ३०० त्रीणिशतानि नेचके कारितानि दिनं प्रतिपुष्फ० ३०५० ॥

( लि० ऑ० ऑ० रि० इ० बॉ० प्रे० पृ० ३५२ )

( ५७ )

॥ ई० ॥ संवत् १३५६ वर्षे ज्येष्ठ शुदि १५ शुक्रे श्रीपल्लीवाल ज्ञातीय श्रेष्ठि पासूसुत साहु पदम भार्या ते जला........ ........देन कुलगुरु श्रीस्मानि (?) मुनि आदेशेन श्रीमुनिसुव्रत— स्वामिबिंबं देवकुलिकां पितामह श्रेयो..................

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३६३ )

( ५८ )

संवत् १३७० वर्षे वैशाख सुदि २ गुरु लीलादिवि श्रेयोर्थे श्रीआदिनाथबिंबं थिरपाल—

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० २६२ )

( ५९ )

ओं नमः सर्वज्ञाय । संवत् १४८५ वर्षे कार्ति शुदि पंचमी ५ बुधे श्रीगिरिनारिमहातीर्थे ठा० षेतसिंह निर्वाणं श्रीमंत्रिद्रालियवंशे श्रीमतसुनामडगोत्रे मरुतीयाणा ठ० जहा पुत्र ठा० लाषू तत्सुत ठा० कदू–तदन्वय वीसल तदंगज ठा० सुरा तदंगभू ठा०

ठा० माथू ठा० भीमसिंह ठ० माला भीमसिंहभार्या ठा० भीमा पुत्री-बाई मोहांण कुक्षिसमुत्पन्न ठा० षेतासिंह भार्या बाई चंदागह श्रीनेमिनाथ चरणं प्रणमति ।

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५४ )

( ६० )

संवत् १४९६ वर्षे आषाढ शुदि १३ गुरौ जंझणपुरिवास्तव्या महतीआणी खरतरगच्छे गौत्र नन्हडे साह चाहूणसंताने साह गुणराज सुत साह जाजा वीरम देवा पुत्र माणकचंद भ्रातृ संघवी राइमल श्रीगिरि[नारि] जात्रा करी श्रीनेमि[नाथस्य]

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५५ )

( ६१ )

स्वस्ति श्री १६८२ वर्षे कार्तिक वदि ६ सोमे श्रीगिरनारतीर्थनी पूर्वपाजनो उद्धार श्रीदिवने संघे पीण्यानिमञ्ज ( पुण्यनिमित्त ? ) श्रीमालज्ञातीयमां सिंघजी मेघजीने उद्यमे कराव्यो ।

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३६० )

( ६२ )

...... राजदेव प[ति] सिधचक्रपति श्रीजयसिंघदेव.... विजय
........ पारकरणायनतापिताभि ........................ वातेन
........ केन उपायेन ........ जादवकुलातिलक .... तीर्थंकरश्रीने-
मिनाथप्रासाद .......... ठ० कीका च ठ० वाता ...........
सूत्रविक्रममारुति ..........................................

( लि० ऑ० रि० इ० बॉ० प्रे० पृ० ३५६ )

( ६३ )

स्वस्ति श्रीधृति—
नमः श्रीनेमिनाथाय ज—
वर्षे फाल्गुन शुदि ५ गुरौ श्री—
तिलकमहाराज श्रीमहापाल—
वयरसिंह भार्या फाउसुत सा—
सुत सा० साईआ सा० मेलामेला—
जसुता रूडी गांगी प्रभृति—
नाथप्रासादः कारितः प्रतिष्टि—
द्रसूरि तत्पदे श्रीमुनिसिंह—
.................................कल्याणत्रय—

( लि० ऑ० ऑ० रि० इ० बॉ० प्रे० पृ० ३५४ )



# अर्बुदाचलस्थितप्रशस्तयः ।



## गूर्जरमहामात्य–श्रीतेजःपालकारित–लूणसिंहवसहिका-गतप्रशस्तिलेखाः ।



( ६४ )

॥ ई० ॥

वंदे सरस्वतीं देवीं याति या कवि [व] मानसं ।
नी [यमा] ना [निजेने] व [यानया] नस [वा]ासिन[ा] ॥१॥

यः [क्ष]ांतिमा [नप्य] रु [णः प्रकोपे
शांतोपि दीप्त]ः स्मरनिग्रहाय ।
निमीलिताक्षो [पि सम] ग्रदर्शी
स वः शिवायास्तु शि*[वात]नूजः ॥ २ ॥

अणहिलपुरमस्ति स्वस्तिपात्रं प्रजा [ना-
म] जरजिर[घुतुल्यैः] पा[ल्य]मानं चु[लुक्यैः] ।
[चिरम] तिरमणीनां य [त्र वक्त्रे]न्दु [मंदी]-
कृत इव [सि]तपक्षप्रक्षयेऽप्यंधकारः ॥ ३ ॥

तत्र प्राग्वाटान्वयमुकुटं कुटजप्रसून(*)विशदयशाः ।
दानविनिर्जितकल्पद्रुमषंखंडश्चंडपः समभूत् ॥ ४ ॥
चंडप्र[सा]दसं[ज्ञः] स्वकुल [प्रासा] दहेमदंडोऽस्य ।
प्रसर[त्की]र्त्तिपताकः पुण्यविपाकेन सूनुरभूत् ॥ ५ ॥

आत्मगुणैः किरणैरिव सोमो रोमोद्गमं सतां (*)कुर्व्वन् ।
उदगादगाधमध्याद्दुग्धोदधिबांधवात्तस्मात् ॥ ६ ॥

एतस्मादजनिजिनाधि[ना]थभक्तिं
बिभ्राणः स्वमनसि शश्वदश्वरा[जः] ।
तस्यासीद्दयिततमा कुमारदेवी
देवीव त्रिपुररिपोः कुमारमाता ॥ ७ ॥

तयोः प्रथमपु(*)त्रोऽभून्मंत्री लूणिगसंज्ञया ।
दैवादवाप बालोऽपि सालोक्यं [व]ासवेन सः ॥ ८ ॥

पूर्व्वमेव सचिवः स कोविदै
र्गण्यते स्म गुणवत्सु लूणिगः ।
यस्य निस्तुषमतेर्मनीपया
धिक्कृतेव धिषणस्य धीरपि ॥ ९ ॥

श्रीमल्लदेवः श्रि(*)तमल्लिदेवः
तस्यानुजो मंत्रिमतल्लिकाऽभूत् ।
बभूव यस्यान्यधनांगनासु
लुब्धा न बुद्धिः शमलब्धबुद्धेः ॥ १० ॥

धर्म्मविधाने भुवनच्छिद्रापिधाने विभिन्नसंधाने ।
सृष्टिकृता नहि सृष्टः प्रतिमल्लो मल्लदेव(*)स्य ॥ ११ ॥

नीलनीरदकदम्बकमुक्तश्वेतकेतुकिरणोद्धरणेन ।
मल्लदेवयशसा गलहस्तो हस्तिमल्लदशनांशुषु दत्तः ॥१२॥

तस्यानुजो विजयते विजितेंद्रियस्य
सारस्वतामृतकृताद्भुतहर्षवर्षः ।
श्रीवस्तु*[पा]ल इति भालतलास्थितानि
दौस्थ्याक्षराणि सुकृती कृतिनां विलुंपन् ॥ १३ ॥

विरचयति वस्तुपालश्चुलुक्यसचिवेषु कविषु च प्रवरः ।
न कदाचिदर्थहरणं श्रीकरणे काव्यकरणे वा ॥ १४ ॥

तेजःपालः पालितस्वा(*)मितेजः-
पुंजः सोऽयं राजते मंत्रिराजः ।
दुर्वृत्तानां शंकनीयः कनीया-
नस्य भ्राता विश्वविभ्रांतकीर्त्तिः ॥ १५ ॥

तेजःपालस्य विष्णोश्च कः स्वरूपं निरूपयेत् ।
स्थितं जगत्रयीमूत्रं यदीयोदरकंदरे ॥ १६ ॥

जाल्हूमाऊसाऊ(*)धनदेवीसोहगावयजुकाख्याः ।
परमलदेवी चैषां क्रमादिमाः सप्त सोदर्यः ॥ १७ ॥

एतेऽश्वराजपुत्रा दशरथपुत्रास्त एव चत्वारः ।
प्राप्ताः किल पुनरवनावेकोदरवासलोभेन ॥ १८ ॥

अनुजन्मना समेतस्तेजःपा(*)लेन वस्तुपालोऽयं ।
मदयति कस्य न हृदयं मधुमासो माधवेनेव ॥ १९ ॥

पंथानमेको न कदापि गच्छे-
दिति स्मृतिप्रोक्तमिव स्मरंतौ ।
सहोदरौ दुर्द्धरमोहचौरे
संभूय धर्म्माध्वनि तौ प्रवृत्तौ ॥ २० ॥

इदं सदा सो(*)दरयोरुदेतु
युगं युगव्यायतदोर्युगश्रि ।
युगे चतुर्थेऽप्यनघेन येन
कृतं कृतस्यागमनं युगस्य ॥ २१ ॥

मुक्तामयं शरीरं सोदरयोः सुचिरमेतयोरस्तु ।
मुक्तामयं किल महीवलयमिदं भाति यत्कीर्त्त्या ॥ २२

एक(*)कोत्पत्तिनिमित्तौ यद्यपि पाणी तयोस्तथाऽप्येकः ।
वामोऽभूदनयोर्न तु सोदरयोः कोऽपि दक्षिणयोः ॥ २३ ॥
धर्म्मस्थानांकितामुर्वीं सर्वतः कुर्वताऽमुना ।
दत्तः पादो बलाद्बंधुयुगलेन कलेर्गले ॥ २४ ॥
इतश्चौलुक्यवीरा(*)णां वंशे शाखाविशेषकः ।
अर्णोराज इति ख्यातो जातस्तेजोमयः पुमान् ॥ २५ ॥
तस्मादनंतरमनंतरितप्रतापः
प्राप क्षितिं क्षतरिपुर्लवणप्रसादः ।
स्वर्गापगाजलवलक्षितशंखशुभ्रा
बभ्राम यस्य लवणाब्धिमतीत्य कीर्त्तिः(*) ॥ २६ ॥
सुतस्तस्मादासीद्दशरथककुत्स्थप्रतिकृतेः
प्रतिक्ष्मापालानां कवलितबलो वीरधवलः ।
यशःपूरे यस्य प्रसरति रतिक्रांतमनसा-
मसाध्वीनां भग्नाऽभिसरणकलायां कुशलता ॥ २७ ॥
चौलुक्यः सुकृती स वीरधवलः क(*)र्णेजपानां जपं
यः कर्णेऽपि चकार न प्रलपतामुद्दिश्य यौ मंत्रिणौ ।
आभ्यामभ्युदयातिरेकरुचिरं राज्यं स्वभर्तुः कृतं
वाहानां निवहा घटाः करटिनां बद्धाश्च सौधांगणे ॥२८॥
तेन मंत्रिद्वयेनायं जाने जानूपवर्त्तिना ।
वि(*)भुर्भुजद्वयेनेव सुखमाश्लिष्यति श्रियं ॥ २९ ॥
इतश्च ।
गौरीवरश्वशुरभूधरसंभवोऽय-
मस्त्यर्बुदः ककुदमद्रिकदंबकस्य ।
मंदाकिनीं घनजटे दधदुत्तमां[गे]
यः श्यालकः शशिभृतोऽभिनयं करोति ॥ ३० ॥

क्वचिदिह विहरंतीर्वी(*)क्षमाणस्य रामाः
प्रसरति रतिरंतर्मोक्षमाकांक्षतोऽपि ।
क्वचन मुनिभिरथ्यां पश्यतस्तीर्थवीर्थी
भवति भवविरक्ता धीरधीरात्मनोऽपि ॥ ३१ ॥

श्रेयःश्रेष्ठवशिष्ठहोमहुतभुक्कुंडान्मृतंडात्मज-
प्रद्योताधिकदेहदीधितिभ(*)रः कोऽप्याविरासीन्नरः ।
तं मत्वा परमारणैकरसिकं स व्याजहार श्रुते-
राधारः परमार इत्यजनि तन्नामाऽथ तस्यान्वयः ॥३२॥

श्रीधूमराजः प्रथमं बभूव
भूवासवस्तत्र नरेंद्रवंशे ।
भूमीभृतो यः कृतवानभिज्ञान्
पक्षद्वयोच्छे(*)दनवेदनासु ॥ ३३ ॥

धंधुकध्रुवभटादयस्तत-
स्ते रिपुद्विपघटाजितोऽभवन् ।
यत्कुलेऽजनि पुमान्मनोरमो
रामदेव इति कामदेवजित् ॥ ३४ ॥

रोदःकंदरवर्त्तिकीर्त्तिलहरीलिप्तामृतांशुद्युते—
रप्रद्युम्नवशो यशोधवल इ(*)त्यासीत्तनूजस्ततः ।
यश्चौलुक्यकुमारपालनृपतिप्रत्यर्थितामागतं
मत्वासत्वरमेव मालवपति ब(व)ल्लालमालब्धवान् ॥३५॥

शत्रुश्रेणीगलविदलनोन्निद्रनिस्त्रिंशधारो
धारावर्षः समजनि सुतस्तस्य विश्वप्रशस्यः ।
क्रोधाक्रांतप्र(*)धनवसुधानिश्चले यत्र जाता-
श्च्योतन्नेत्रोत्पलजलकणाः कोंकणाधीशपत्न्यः ॥ ३६ ॥

सोऽयं पुनर्दाशरथिः पृथिव्या-
मव्याहतौजाः स्फुटमुज्जगाम ।
मारीचवैरादिव योऽधुनापि
[मृ]गव्यमव्यग्रमतिः करोति ॥ ३७ ॥

सामं(*)तसिंहसमितिक्षितिविक्षतौजः-
श्रीगूर्जरक्षितिपरक्षणदक्षिणासिः ।
प्रह्लादनस्तदनुजो दनुजोत्तमारि-
चारित्रमत्र पुनरुज्ज्वलयांचकार ॥ ३८ ॥

देवी सरोजासनसंभवा किं
कामप्रदा किं सुरसौरभेयी ।
प्रह्लादनाकारधरा(*)धराया-
मायातवत्येष न निश्चयो मे ॥ ३९ ॥

धारावर्षसुतोऽयं जयति श्रीसोमसिंहदेवो यः ।
पितृतः शौर्यं विद्यां पितृव्यकाद्दानमुभयतो जगृहे ॥ ४० ॥

मुक्त्वा विप्रकरानरातिनिकरान्निर्जित्य तत्किंचन
प्रापत्संप्रति सोम(*)सिंहनृपतिः सोमप्रकाशं यशः ।
येनोर्व्वीतलमुज्ज्वलं रचयताप्युत्ताम्यतामीर्ष्यया
सर्वेशामिह विद्विषां नहि मुखान्मालिन्यमुन्मूलितं ॥ ४१ ॥

वसुदेवस्येव सुतः श्रीकृष्णः कृष्णराजदेवोऽस्य ।
मात्राधिकप्रतापो यशोद(*)यासंश्रितो जयति ॥ ४२ ॥

इतश्च—

अन्वयेन विनयेन विद्यया
विक्रमेण सुकृतक्रमेण च ।

क्वापि कोऽपि न पुमानुपैति मे
वस्तुपालसदृशो दृशोः पथि ॥ ४३ ॥

दयिता ललितादेवी तनयमवीतनयमाप सचिवेंद्रात्।
नाम्ना जयंत(*)सिंहं जयंतमिंद्रात्पुलोमपुत्रीव ॥ ४४ ॥

यः शैशवे विनयवैरिणि बोधवंध्ये
धत्ते नयं च विनयं च गुणोदयं च।
सोऽयं मनोभवपराभवजागरूक-
रूपो न कं मनसि चुंबति जैत्रसिंहः ॥ ४५ ॥

श्रीवस्तुपालपुत्रः कल्पायुरयं जयं(*)तसिंहोऽस्तु।
कामादधिकं रूपं निरूप्यते यस्य दानं च ॥ ४६ ॥
स श्रीतेजःपालः सचिवश्चिरकालमस्तु तेजस्वी।
येन जना निश्चिताश्चिंतामणिनेव नंदंति ॥ ४७ ॥

यच्चाणक्यामरगुरुमरुद्व्याधिशुक्रादिकानां
प्रागुत्पादं व्यधित भुवने(*)मंत्रिणां बुद्धिधाम्नां।
चक्रे ऽभ्यासः स खलु विधिना नूनमेनं विधातुं
तेजःपालः कथमितरथाधिक्यमापैष तेषु ॥ ४८ ॥

अस्ति स्वतिनिकेतनं तनुभृतां श्रीवस्तुपालानुज-
स्तेजःपाल इति स्थितिं बलिकृतामुर्व्वीतले पालयन्।
आत्मीयं ब(*)हु मन्यते न हि गुणग्रामं च कामंदकि-
श्चाणक्योऽपि चमत्करोति न हृदि प्रेक्षास्पदं प्रेक्ष्य यं ॥४९॥

इतश्च—

महं॰ श्रीतेजःपालस्य पत्न्याः श्रीअनुपमदेव्याः पितृवंश-
वर्णनं ॥

प्राग्वाटान्वयमंडनैकमुकुटः श्रीसांद्रचंद्रावती-
वास्तव्यः स्त(*)वनीयकीर्त्तिलहरिप्रक्षालितक्ष्मातलः ।
श्रीगागाभिधया सुधीरजनि यद्वृत्तानुरागादभूत्
को नाम्प्रमदो न दोलितशिरा नोद्धूतरोमा पुमान् ॥५०॥
अनुसृतसज्जनसरणिर्धरणिगनामा बभूव तत्तनयः ।
स्वप्रभुहृदये(*)गुणिना हारेणेव स्थितं येन ॥ ५१ ॥
त्रिभुवनदेवी तस्य त्रिभुवनविख्यातशीलसंपन्ना ।
दयिताऽभूदनयोः पुनरंगं द्वेधा मनस्त्वेकं ॥ ५२ ॥
अनुपमदेवी देवी साक्षाद्दाक्षायणीव शीलेन ।
तद्दुहिता सहिता श्रीतेजःपालेन(*) पत्याऽभूत् ॥ ५३ ॥
इयमनुपमदेवी दिव्यवृत्तप्रसून-
व्रततिरजनि तेजःपालमंत्रीशपत्नी ।
नयविनयविवेकौचित्यदाक्षिण्यदान-
प्रमुखगुणगणैंदुद्योतिताशेषगोत्रा ॥ ५४ ॥
लावण्यसिंहस्तनयस्तयोरयं
रयं जयन्नि(*)[द्रि]यदुष्टवाजिनां ।
लब्ध्वापि मीनध्वजमंगलं वयः
प्रयाति धर्म्मैकविधायिनाऽध्वना ॥ ५५ ॥
श्रीतेजपालतनयस्य गुणानमुष्य
श्रीलूणसिंहकृतिनः कति न स्तुवंति ।
श्रीबंधनोद्धुरतरैरपि यैः समंता-
दुद्दामता त्रिजगति क्रि(*)यते स्म कीर्तेः ॥ ५६ ॥
गुणधननिधानकलशः प्रकटोऽयमवेष्टितश्च खलसर्पैः ।
उपचयमयते सततं सुजनैरुपजीव्यमानोऽपि ॥ ५७ ॥

मल्लदेवसचिवस्य नंदनः
पूर्णसिंह इति लीलुकासुतः ।
तस्य नंदति सुतोयमल्लणा(*)-
देविभूः सुकृतवेश्म पेथडः ॥ ५८ ॥

अभूदनुपमा पत्नी तेजःपालस्य मंत्रिणः ।
लावण्यसिंहनामायमायुष्मानेतयोः सुतः ॥ ५९ ॥
तेजःपालेन पुण्यार्थं तयोः पुत्रकलत्रयोः ।
हर्म्म्यं श्रीनेमीनाथस्य तेने तेनेदमर्बुदे(*) ॥ ६० ॥

तेजःपाल इति क्षितींदुसचिवः शंखोज्ज्वलाभिः शिला-
श्रेणीभिः स्फुरदिंदुकुंदरुचिरं नेमिप्रभोर्मंदिरं ।
उच्चैर्मंडपमग्रतो जिन[वरा]वासाद्विपंचाशतं
तत्पार्श्वेषु बलानकं च पुरतो निष्पादयामासिवान् ॥६१॥

श्रीमच्चंड(*)[प]संभवः [सम]भवच्चंडप्रसादस्ततः
सोमस्तत्प्रभवोऽश्वराज इति तत्पुत्राः पवित्राशयाः ।
श्रीमल्लूणिगमल्लदेवसचिवश्रीवस्तुपालाह्वया-
स्तेजःपालसमन्विता जिनमतारामोन्नमन्नीरदाः ॥ ६२ ॥
श्रीमंत्रीश्वरवस्तुपालतनयः श्रीजै(*)त्रसिंहाह्वय-
स्तेजःपालसुतश्च विश्रुतमतिर्ल्लावण्यसिंहाभिधः ।
एतेषां दश मूर्त्तयः करिवधूस्कंधाधिरूढाश्चिरं
राजंते जिनदर्शनार्थमयतां दिग्नायकानामिव ॥ ६३ ॥
मूर्त्तीनामिह पृष्ठतः करिवधूपृष्ठप्रतिष्ठाजुषां
तन्मूर्त्तीर्विम(*)लाश्मखत्तकगताः कांतासमेता दश ।
चौलुक्यक्षितिपालवीरधवलस्याद्वैतबंधुः सुधी-
स्तेजःपाल इति व्यधापयदयं श्रीवस्तुपालानुजः ॥६४॥

तेजःपालसकलप्रजोपजीव्यस्य वस्तुपालस्य ।
सविधे विभाति सफलः(*) सरोवरस्येव सहकारः ॥ ६५ ॥
तेन भ्रातृयुगेन या प्रतिपुरग्रामाध्वशैलस्थलं
वापीकूपनिपानकाननसरःप्रासादसत्रादिका ।
धर्म्मस्थानपरंपरा नवतरा चक्रेऽथ जीर्णोद्धृता
तत्संख्यापि न बुध्यते यदि परं तद्वेदि(*)नी मेदिनी ॥६६॥
शंभोः श्वासगतागतानि गणयेद् यः सन्मतिर्योऽथ वा
नेत्रोन्मीलनमीलनानि कलयेन्मार्कंडनाम्नो मुनेः ।
संख्यातुं सचिवद्वयीविरचितामेतामपेतापर-
व्यापारः सुकृतानुकीर्तनततिं सोप्युज्जिहीते यदि(*) ॥६७॥
सर्व्वत्र वर्त्ततां कीर्त्तिरश्वराजस्य शाश्वती ।
सुकर्त्तुमुपकर्त्तुंच जानीते यस्य संततिः ॥ ६८ ॥
आसीच्चंडपमंडितान्वयगुरुर्न्नागेंद्रगच्छश्रिय-
श्चूडारत्नमयत्नसिद्धमहिमा सूरिर्महेंद्राभिधः ।
तस्माद्विस्मयनीयचारुचरितः श्रीशांति(*) [सूरिस्त] तो-
प्यानंदामरसूरियुग्ममुदयच्चन्द्रार्कदीपद्युति ॥ ६९ ॥
श्रीजैनशासनवनीनवनीरवाहः
श्रीमांस्ततोऽप्यघहरो हरिभद्रसूरिः ।
विद्यामदोन्मदगदेष्वनवद्यवैद्यः
ख्यातस्ततो विजयसेनमुनीश्वरोऽयं ॥ ७० ॥
गुरो[स्त](*)स्या[शि]षां पात्रं सूरिरस्त्युदयप्रभः ।
मौक्तिकानीव सूक्तानि भांति यत्प्रतिभांबुधेः ॥ ७१ ॥
एतद्धर्म्मस्थानं धर्म्मस्थानस्य चास्य यः कर्त्ता ।
तावद्द्वयमिदमुदियादुदयत्ययमर्बुदो यावत् ॥ ७२ ॥

श्रीसोमेश्वरदेवश्चुलुक्यनरदेवसेवितांह्रि(*)युगः ।
रचयांचकार रुचिरां धर्म्मस्थानप्रशस्तिमिमां ॥ ७३ ॥
श्रीनेमेरम्बिकायाश्च प्रसादादर्बुदाचले ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिशालिनी ॥ ७४ ॥

सूत्र० केल्हणसुतधांधलपुत्रेण चंडेश्वरेण प्रशस्तिरियमुत्कीर्णा (*) श्रीविक्रम [ संवत् १२८७ वर्षे ] फाल्गुणवदि ३ रवौ श्रीनागेंद्रगच्छे श्रीविजयसेनसूरिभिः प्रतिष्ठा कृता ॥



( ६५ )

॥ ई०॥ ॐ नमः ............... [संव]त् १२८७ वर्षे लौकिकफाल्गुनवदि ३ रवौ अद्येह श्रीमदणहिलपाटके चौलुक्यकुलकमलराजहंससमस्तराजावलीसमलंकृतमहाराजाधिराजश्रीभ.........(*) विजयिराज्ये त............... ............... ।श्रीवसिष्ट(ष्ठ)कुंडयजनानलोद्भूतश्रीमद्धूमराजदेवकुलोत्पन्नमहामंडलेश्वरराजकुलश्रीसोमासिंहदेवविजयिराज्ये तस्यैव महाराजाधिराजश्रीभीमदेवस्य प्रसा[द] ......( * )रात्रामंडले श्रीचौलुक्यकुलोत्पन्नमहामंडलेश्वरराणकश्रीलवणप्रसाददेव सुतमहामंडलेश्वरराणक श्रीवीरधवलदेवसत्कसमस्तमुद्राव्यापारिणा श्रीमदणहिलपुरवास्तव्यश्रीप्राग्वाटज्ञातीय ठ० श्रीचंड [प]...............(*) चंडप्रसादात्मजमहं० श्रीसोमतनुज ठ० श्रीआसराजभार्या ठ० श्रीकुमारदेव्योः पुत्रमहं० श्रीमल्लदेवसंघपतिमहं० श्रीवस्तुपालयोरनुजसहोदरभ्रातृमहं० श्रीतेजःपालेन स्वकीयभार्यामहं० श्रीअनुपमदेव्यास्तत्कुक्षि[ सं ]...........(*)

१–' भीमदेव -' २–' सुत ठ० श्री ' ३–' सूत प–'

वित्रपुत्रमहं० श्रीलूणसिंहस्य च पुण्ययशोभिवृद्धये श्रीमदर्बुदाचलोपरि देउलवाडाग्रामे समस्तदेवकुलिकालंकृतं विशालहस्तिशालोपशोभितं श्रीलूणसिंहवसहिकाभिधानश्रीनेमिनाथदेवचैत्यमिदं कारितं ॥ छ ॥ (*) प्रतिष्ठितं श्रीनागेंद्रगच्छे श्रीमहेंद्रसूरिसंताने श्रीशांतिसूरिशिष्यश्रीआणंदसूरिश्रीअमरचंद्रसूरिपट्टालंकरणप्रभुश्रीहरिभद्रसूरिशिष्यैः श्रीविजयसेनसूरिभिः ॥ छ ॥ अत्र च धर्म्मस्थाने कृतश्रावकगोष्टि(ष्ठि)कानां नामा (*) नि यथा ॥ महं० श्रीमल्लदेव महं० श्रीवस्तुपाल महं० श्रीतेजःपालप्रभृतिभ्रातृत्रयसंतानपरंपरया तथा महं० श्रीलूणसिंहसत्कमातृकुलपक्षे श्रीचंद्रावतीवास्तव्यप्राग्वाटज्ञातीय ठ० श्रीसावदेवसुत ठ० श्रीशालिगतनुज ठ० (*) श्रीसागरतनय ठ० श्रीगागा पुत्र ठ० श्रीधरणिग भ्रातृ महं० श्रीराणिगमहं० श्रीलीला तथा ठ० श्रीधरणिग भार्या ठ०श्रीतिहुणदेविकुक्षिसंभूत महं० श्रीअनुपमदेवीसहोदरभ्रातृ ठ० श्रीखीम्बसीह ठ० श्रीआम्बसीह ठ० श्रीऊदल(*)तथा महं० श्रीलीलासुतमहं० श्रीलूणसीह तथा भ्रातृ ठ० जगसीह ठ० रत्नसिंहानां समस्तकुटुंबेन एतदीयसंतानपरंपरया च एतस्मिन् धर्म्मस्थाने सकलमपि स्नपनपूजासारादिकं सदैव करणीयं निर्वाहणीयं च ॥ तथा ॥ (*) श्रीचंद्रावत्याः सत्कसमस्तमहाजनसकलजिनचैत्यगोष्टि(ष्ठि)कप्रभृतिश्रावकसमुदायः ॥ तथा उवरणी कीसरउलीग्रामीयप्राग्वाटज्ञा० श्रे० रासल उ० आसधर तथा ज्ञा० माणिभद्र उ० श्रे० आल्हण तथा ज्ञा० श्रे० देल्हण उ० खीम्वसी(*)ह धर्कटज्ञातीय श्रे० नेहा उ० साल्हा तथा ज्ञा० धउलिग उ० आसचंद्र तथा ज्ञा० श्रे० वहुदेव उ० सोम प्राग्वाटज्ञा० श्रे० सावड उ० श्रीपाल तथा ज्ञा० श्रे० जींदा उ० पाल्हण धर्कटज्ञा० श्रे० पासु

उ० सादा प्राग्वाटज्ञातीय पूना उ० सा(*)ल्हा तथा श्रीमालज्ञा० पूना उ० साल्हाप्रभृतिगोष्टि(ष्ठि)काः। अमीभिः श्रीनेमिनाथदेव-प्रतिष्टा(ष्ठा)वर्षग्रंथियात्राष्टाहिकायां देवकीयचैत्रवदि ३ तृतीयादिने स्नपनपूजाद्युत्सवः कार्यः॥ तथा कासहृदग्रामीय ऊएसवालज्ञा(*)तीयश्रे० सोहि उ० पाल्हण तथा ज्ञा० श्रे० सलखण उ० वालण प्राग्वाटज्ञा० श्रे० सांतुय उ० देल्हुय तथा ज्ञा० श्रे० गोसल उ० आल्हा तथा ज्ञा० श्रे० कोला उ० आम्वा तथा ज्ञा० श्रे० पासचंद्र उ० पूनचंद्र तथा ज्ञा० श्रे० जसवीर उ० ज(*)गा तथा ज्ञा० ब्रह्मदेव उ० राल्हा श्रीमालज्ञा० कडुयरा उ० कुलधरप्रभृतिगोष्टि(ष्ठि)काः। अमीभिस्तथा ४ चतुर्थीदिने श्रीनेमिनाथदेवस्य द्वितीयाष्टाहिकामहोत्सवः कार्यः॥ तथा ब्रह्माणवास्तव्यप्राग्वाटज्ञातीयमहाजनि० (*) आंमिग उ० पूनड ऊएसवालज्ञा० महा० धांधा उ० सागर तथा ज्ञा० महा० साटा उ० वरदेव प्राग्वाटज्ञा० महा० पाल्हण उ० उदयपाल ओइसवालज्ञा० महा० आवोधन उ० जगसीह श्रीमालज्ञा० महा० वीसल उ० पासदेव प्रा(*)ग्वाटज्ञा० महा० वीरदेव उ० अरसीह तथा ज्ञा० श्रे० धणचंद्र उ० रामचंद्रप्रभृति गोष्टि(ष्ठि)काः। अमीभिस्तथा५ पंचमीदिने श्रीनेमिनाथदेवस्य तृतीयाष्टाहिकामहोत्सवः कार्यः॥ तथा धउलीग्रामीय प्राग्वाटज्ञातीयश्रे० सा(*)जण उ० पासवीर तथा ज्ञा० श्रे० वोहडि उ० पूना तथा ज्ञा० श्रे० जसडुय उ० जेगण तथा ज्ञातीय श्रे० साजन उ० भोला तथा ज्ञा० पासिल उ० पूनुय तथा ज्ञा० श्रे० राजुय उ० सावदेव तथा ज्ञा० दूगसरण उ० साहणीय ओइसवाल(*)ज्ञा० श्रे० सलखण उ० महं० जोगा तथा ज्ञा० श्रे[०] देवकुंयार उ० आसदेव प्रभृतिगोष्टि(ष्ठि)काः। अमीभिस्तथा ६ षष्ठी-

दिने श्रीनेमिनाथदेवस्य चतुर्थाष्टाहिकामहोत्सवः कार्यः ॥ तथा मुंडस्थलमहातीर्थवास्तव्यप्राग्वाटज्ञातीय (*) श्रे० संधीरण उ० गुणचंद्र पाल्हा तथा श्रे० सोहिय उ० आश्वेसर तथा श्रे० जेजा उ० खांखण तथा फीलिणीग्रामवास्तव्य श्रीमालज्ञा० वापलगा-जणप्रमुखगोष्टि(ष्ठि)काः । अमीभिस्तथा ७ सप्तमीदिने श्रीनेमिनाथ-देवस्य पंचमाष्टाहिकाम(*)होत्सवः कार्यः ॥ तथा हंडाउद्राग्रामड-वाणीग्रामवास्तव्य श्रीमालज्ञातीय श्रे० आम्बुय उ० जसरा तथा ज्ञा० श्रे[०] लखमण उ० आसू तथा ज्ञा० श्रे० आसल उ० जगदेव तथा ज्ञा० श्रे० सूमिग उ० धणदेव तथा ज्ञा० श्रे० जिण-देव उ० जाला(*)प्राग्वाटज्ञा० श्रे० आसल उ० सादा श्रीमालज्ञा० श्रे० देदा उ० वीसल तथा ज्ञा० श्रे० आसधर उ० आसल तथा ज्ञा० श्रे० थिरदेव उ० वीरुय तथा ज्ञा श्रे० गुणचंद्र उ० देव-धर तथा ज्ञा० श्रे० हरिया उ० हेमा प्राग्वाटज्ञा० श्रे० लखमण(*) उ० कडुयाप्रभृतिगोष्टि(ष्ठि)काः । अमीभिस्तथा ८ अष्टमीदिने श्रीनेमिनाथ देवस्य षष्टाष्टाहिकामहोत्सवः कार्यः । तथा [म]डाहड-वास्तव्यप्राग्वाटज्ञातीय श्रे० देसल उ० ब्रह्मसरणु तथा ज्ञा०जसकर उ०श्रे०धणिया तथा ज्ञा[०] श्रे० (*) देल्हण उ० आल्हा तथा ज्ञा० श्रे० वाला उ० पद्मसिह तथा ज्ञा० श्रे० आंबुय उ० वोहडि तथा ज्ञा० श्रे० वोसरि उ० पूनदेव तथा ज्ञा [०] श्रे० वीरुय उ० स्राजण तथा ज्ञा० श्रे० पाहुय उ० जिणदेवप्रभृतिगोष्टि(ष्ठि)काः । अमीभिस्तथा ९ नवमीदिने (*) श्रीनेमिनाथदेवस्य सप्तमाष्टाहि-कामहोत्सवः कार्यः । तथा साहिलवाडावास्तव्य ओइसवालज्ञातीय श्रे० देल्हा उ० आल्हण श्रे० नागदेव उ० आम्वदेव श्रे० का-ल्हण उ० आसल श्रे० वोहिथ उ० लाखण श्रे० जसदेव उ०

( २७८ )

संवत् १६७५ वर्षे माघवदि ४ शनौ श्रीमालीज्ञातीय वृद्धशाखीय सा० रंगा भार्या कीलारी सुत लहुआ.........सुत पनीआ समरसुत हीरजी श्रीआदिनाथबिंबं कारितं प्रतिष्ठितं तपागच्छे गुरु प्रभावक भट्टारक श्रीविजयसेनसूरिपट्टालंकार भरतभूमिभामिनी शृंगारहार भट्टारक श्रीविजयदेवसूरिभिः पंडितश्रीकुशलसागरगणि प्रमुखपरिवारयुतैः ।

( २७९ )

( 1 ) ॥ र्द० ॥ प्राग्वाटवंशे श्रे० बाहडयेन श्रीजिन-
( 2 ) भद्रसूरिसदुपदेशेन पादपराग्रामे उं-
( 3 ) देरवसाहिकाचैत्यं श्रीमहावीरप्रतिमा-
( 4 ) युतं कारितं । तत्पुत्रौ ब्रह्मदेवशरणदे-
( 5 ) वौ । ब्रह्मदेवेन सं० १२७५ अत्रैव श्रीने-
( 6 ) मिमंदिरे रंगमंडपे दाढाधरः कारितः ॥
( 7 ) श्रीरत्नप्रभसूरिसदुपदेशेन । तदनुज श्रे०
( 8 ) सरणदेवभार्या सूहवदेवि तत्पुत्राः श्रे०
( 9 ) वीरचंद्र पासड० आंबडरावण । यैः श्रीपर-
( 10 ) मानंदसूरीणामुपदेशेन सप्ततिशततीर्थं का-
( 11 ) रितं ॥ सं० १३१० वर्षे । वीरचंद्रभार्या सुषामिणि-
( 12 ) पुत्र पूना भार्या सोहग पुत्र लूणा झांझण । आं-
( 13 ) बडपुत्र वीजा खेता । रावण भार्या हीरूपुत्र बो-
( 14 ) डा भार्या कामलपुत्र कडुआ द्वि० जयता भार्या मूं०-
( 15 ) या पुत्र देवपाल । कुमारपाल ।....०अरिसिंहना-

( 16 ) गउरदेवि प्रभृति कुटुंबसमन्वितैः श्रीपरमा-
( 17 ) नंदसूरीणामुपदेशेन सं० १३३८ श्रीवासुपूज्य-
( 18 ) देवकुलिकां। सं० १३४५ श्रीसंमेताशिखर-
( 19 ) तीर्थ मुख्यप्रतिष्ठां महातीर्थयात्रां विधाप्या-
( 20 ) त्मजन्म एवं पुण्यपरंपरया सफलीकृतः ॥
( 21 ) तदद्यापि पोसीनाग्रामे श्रीसंघेनपूज्यग्राम(मान ?)-
( 22 ) मस्ति ॥ शुभमस्तु श्रीश्रमणसंघप्रसादतः ॥

——*०*——

( २८० )

( 1 ) ॥ र्द० ॥ संवत् १३?० वर्षे वैशाखवदि ५ गुरौ प्राग्वाटज्ञातीय श्रे० वील्हण मातृ-

( 2 ) रूपिणि श्रेयोऽर्थं सुत आसपालेन सीधपाल-पद्मसीह सहितेन निज-

( 3 ) विभवानुसारेण आरासणे नगरे श्रीअरिष्टनेमिमंडपे श्रीचंद्रगच्छी-

( 4 ) य श्रीपरमाणंदसूरि शिष्य श्रीरत्नप्रभसूरीणामुपदे-देशेन स्तंभः कारितः ॥

( २८१ )

( 1 ) ॥ र्द० ॥ संवत् १३४४ वर्षे आ-
( 2 ) षाढ सुदि पूर्णिमायां । देवश्रीने-
( 3 ) मिनाथ चैत्ये श्रीकल्याणत्र-
( 4 ) यस्य पूजार्थं श्रे० सिरधर । त-

(5) त्पुत्र श्रे॰ गांगदेवेन । वीस-
(6) लप्रीय द्रमाणां १२० श्रीनेमि-
(7) नाथदेवस्य भांडागारे निक्षि-
(8) प्तं । वृद्धफलभोग[ाय] मासं प्रतिद्र-
(9) म ३ चटंति । पूजार्थं । आचंद्र-
(10) कालं यावत् । शुभं भवतु ॥ छ । श्री ॥

( २८२ )

(1) संवत् १५२६ वर्षे आषाढवदि ९ सोमे श्री
(2) पत्तनवास्तव्य गूजरज्ञातीय महं॰ पूजा॰
(3) सुत सीधर नित्यं प्रणमति ॥

( २८३ )

कल्याणत्रये श्रीनेमिनाथबिंबानि प्रतिष्ठितानि नवांगवृत्ति-कार श्रीमदभयदेवसूरिसंतानीय श्रीचंद्रसूरिभिः श्रे॰ सुमिग श्रे॰ वीरदेव श्रेष्ठिगुणदेवस्य भार्या जयतश्री साहूपुत्र वइरा पुना लुणा विक्रम खेता हरपति कर्मट राणा कर्मटपुत्र खीमसिंह तथा वीरदेव सुत अरसिंह प्रभृतिकुटुंबसहितेन गांगदेवेन कारितानि....

( २८४ )

(1) संवत् १३३८ वर्षे ज्येष्ठशुदि १४ शुक्रे श्रीनेमिनाथ-चैत्ये संविज्ञविहारि श्रीचक्रेश्वरसूरिसंताने श्रीजयसिंहसू-रिशिष्य श्रीसोमप्रभसूरिशिष्यैः श्रीवर्द्धमानसूरिभिः प्रतिष्ठितं । आरासणकर वास्तव्य-

(2) प्राग्वाटज्ञातीय श्रे० गोनासंताने श्रे० आमिगभार्यारत-
नी पुत्र तुलहारि आसदेव भ्रा० पासड तत्पुत्र सिरि-
पाल तथा आसदेव भार्या सहजू पुत्र तु० आसपालेन
भा० धराणि..................सीत्त सिरिमति तथा

(3) आसपालभार्या आसिणि पुत्र लिंबदेव हरिपाल तथा
धरणिग भार्या ..............................ऊदा भार्या
पाल्हणदेवि प्रभृति कुटुंब सहितेन श्रीमुनिसुव्रतस्वामि-
बिंबं अश्वावबोधसमलिकाविहारतीर्थोद्धारसहितं कारि-
तं ॥ मंगलमहाश्रीः॥

( २८५ )

सं० १३६६ फागुणशुदि १० गुरौ प्राग्वाटज्ञा[तीय]....
........हदेव.........[अष्टा]पद तीर्थं कारितं।

( २८६ )

संवत् १२०४ फाल्गुणवादि ११ कुजे श्रीनेमिनाथचैत्यमुख-
मंडपखत्तके श्रीशांतिबिंबं..........................................

( २८७ )

संवत् ११९१ वर्षे..................................................

( २८८ )

संवत् १२०८ फागुणसुदि १० रवौ....... आरासनाकरे
श्रीनेमिनाथचैत्यमुखमंडपे श्रीनेमिनाथबिंबं कारितं

( २८९ )

( 1 ) संवत् १२०६ ज्येष्ठसुदि ९ मंगलदिने श्रे० सहजिगसुतेन उद्धा परमश्रावकेण निजानुज भोदा भागिनेय ममा भगिनी लोली प्रभृति स्वकुटुंब-

( 2 ) समन्वितेन निजकलत्रसलक्षणश्रेयोनिमित्तं श्रीपार्श्वजिनबिंबं कारापितं । प्रतिष्ठितं श्रीअजितदेवसूरिशिष्यैः श्रीविजयसिंहसूरिभिः ।

( २९० )

संवत् १३३८ वर्षे ज्येष्ठसुदि १४ शनौ श्रीनेमिनाथचैत्ये वृहद्गच्छीय श्रीरत्नप्रभसूरि शिष्यश्रीहरिभद्रसूरिशिष्यैः श्रीपरमानंदसूरिभिः प्रतिष्ठितं प्राग्वाटज्ञातीय श्रे० शरणदेवभार्या सुहडदेवी तत्पुत्र श्रीवीरचंद्रभार्या सुषमिणी पुत्र पुना भार्या सोहगदेवी [पुत्र] आंबडभार्या अभयसिरि पुत्र बीजा खेता रावण भार्या हीरु पुत्र बोडासिंह भार्या जयतलदेवी प्रभृतिस्वकुटुंबसहितैः रावणपुत्रैः स्वकीयसर्वजनानां श्रेयोऽर्थं श्रीवासुपूज्यदेवकुलिकासहितं कारितं प्रतिष्ठापितं च ।

( २९१ )

संवत् १३३५ वर्षे माघसुदि १३ चंद्रावत्यां जालणभार्या ......................भार्या मोहिनी सुत सोहड भ्रातृ सांगाकेन आत्मश्रेयोर्थं श्रीशांतिनाथबिंबं कारापितं प्रतिष्ठितं च श्रीवर्द्धमानसूरिभिः ।

( २९२ )

संवत् १३३७ वर्षे ज्येष्ठसुदि १४ शुक्रे बृहद्गच्छीय श्रीचक्रेश्वरसूरिसंताने पूज्यश्रीसोमप्रभसूरिशिष्यैः श्रीवर्द्धमानसूरिभिः श्रीशांतिनाथबिंबं प्रतिष्ठितं कारितं श्रेष्ठि आसलभार्या मंदोदरी तत्पुत्र श्रेष्ठि गला भार्या शीलू तत्पुत्र मेहा तदनुजेन साहु खांखणेन निजकुटुंबश्रेयसे स्वकारितदेवकुलिकायां स्थापितं च ॥ मंगलमहाश्रीः । भद्रमस्तु ॥

——:o:——

( २९३ )

(1) संवत् १६७५ वर्षे माघशुद्ध ४ शनौ श्रीउकेशवंशीय वृद्धशाखीय सा० अहिया भार्या तेजलदे सुत गावा भा० गोरदे

(2) सुत सा० नानिआकेन भा० नामलदे सुत सोमजीयुतेन श्रीमहावीरबिंबं कारितं प्रतिष्ठितं च श्रीतपागच्छे भ० श्रीहरिविजयसूरी-

(3) श्वरपट्टप्रभाकर भ० श्रीविजयसेनसूरि पट्टालंकार भट्टारक श्रीविजयदेवसूरिभिः ॥ श्रीआरासणनगरे ॥ बु० राजपालो दामेन ।

( २९४ )

र्द० ॥ संवत् १११८ फाल्गुन सुदि ९ सोमे ॥ आरासणाभिधाने स्थाने तीर्थाधिपस्य प्रतिमा कारिता ......... .......



( २९५ )

( 1 ) संवत् १६७५ वर्षे माघधवलेतर ४ शनौ श्रीओके-
शवंशीय वृद्धसज्जनीय सा० जगडु भा० जमणादे
सुत राहिआ भा० चांपलदे

( 2 ) सुत नानजीकेन भा० नवरंगदेयुतेनात्मश्रेयोर्थं
श्रीपार्श्वनाथबिंबं का० प्र० श्रीतपागच्छेश्वर भ०
श्रीहीरविजयसूरीश्वर पट्टोदय–

( 3 ) दिनमणि भ० श्रीविजयसेनसूरि पट्टालंकारहार
भट्टारकश्रीविजयदेवसूरिभिः पं० कुशलसागरगणि
प्रमुखपरिवारयुतैः ॥ बु० राजपालदामेन ॥

( २९६ )

संवत् १२१६ वैशाखसुदि २ श्रे० पासदेव पुत्र वीर पुना-
भ्यां भ्रातृ जेहड श्रेयोर्थं श्रीपार्श्वनाथप्रतिमेयं कारिता श्रीनेमि-
चन्द्राचार्यशिष्यैः देवाचार्यैः प्रतिष्ठिता ॥

( २९७ )

संवत् ११६१ थिरापद्रीयगच्छे श्रीशीतलनाथबिंबं [कारितं]

( २९८ )

संवत् १२७६ माघशुदि १३ रवौ श्रेष्ठि सलखण सुत
प्रतिष्ठितं धर्मघोषसूरिभिः ।

( २९९ )

स्वस्ति श्रीविक्रमसंवत् १२५९ वर्षे आषाढसुदि २ शनौ बहुदेव पुत्र्याः श्रे० मणिभद्र सलक्षणायाः श्रेयोर्थं वासुपूज्यबिंबं कारापितं प्रतिष्ठितं श्रीधर्मघोषसूरिभिः ॥

( ३०० )

स्वस्ति श्रीविक्रमसंवत् १२५९ आषाढसुदि २ शनौ श्रेष्ठि गोहडसुत श्रेष्ठि कुमारस्य श्रेयसे तत्पुत्र श्रेष्ठि सज्जनेन श्रीसंभवनाथबिंबं कारितं सूरिभिश्च प्रतिष्ठितं ॥

( ३०१ )

स्वस्ति श्रीविक्रमसंवत् १२५९ वर्षे आषाढसुदि २ शनौ आरासणमंडले कशुरशंभु (?) श्री ...... श्रीकुमारसुत श्रीसज्जनेन स्वश्रेयोर्थं श्रीसुमतिनाथबिंबं कारितं प्रतिष्ठितं श्रीधर्मघोषसूरिभिः॥

———0———

( ३०२ )

ई० ॥ संवत् ११३८ धांग वल्लभदेवीसुतेन वीरकश्रावकेन श्रेयांसजिनप्रतिमा कारिता ।

( ३०३ )

ई० ॥ संवत् ११३८ सोमदेवसहोदरेण सुंदरीसुतेन शीतलजिनप्रतिमा कारिता ।

( ३०४ )

ई० ॥ संवत् १३४६ ज्येष्ठ सु० ९ शुक्रे पूर्णदेव भोलिका

प्राग्वाटज्ञातीय ठ० श्रीचंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराजसुत महं० श्रीमल्लदेव महं० श्रीवस्तुपालयोरनुजमहं० श्रीतेजपालेन कारितश्रीलूणसीहवसहिकायां श्रीनेमिनाथ (*) देव-चैत्यजगत्यां श्रीचंद्रावतीवास्तव्य प्राग्वाटज्ञातीय श्रे० वीरचंद्र भार्या श्रियादेवि पुत्र श्रे० साढदेव श्रे० छाहड श्रे० साढदेव भार्या माऊ पुत्र आसल श्रे० जेलण जयतल जसधर श्रे० छाहडभार्याथिरदेवि पुत्र घांघस श्रे० गोलण जगसीह पाल्हण तथा श्रे० जेलण पुत्र श्रे० समुद्धर श्रे० जयतल पुत्र देवधर मयधर श्रीधर आंबड ॥ (*) जसधर पुत्र आसपाल । तथा श्रे० गोलण पुत्र वीरदेव विजयसीह कुमरसीह रत्नसीह जगसीह पुत्र सोम। तथा आसपाल पुत्र सिरिपाल-विजयसीह पुत्र अरसीह श्रीधर पुत्र अभयसीह तथा श्रे० गोलण-समुद्धर प्रमुखकुटुंबसमुदायेन श्रीशान्तिनाथदेवबिंबं कारितं प्रतिष्ठितं नवांगवृत्तिकारश्रीअभयदेवसूरिसंतानीयैः श्रीधर्म्मघोषसूरिभिः ॥

( ८६ )

ई० ॥ स्वस्ति श्रीनृपविक्रमसंवत् १२९३ वर्षे चैत्र वदि ८ शुक्रे अद्येह श्रीअर्बुदाचलमहातीर्थे अणहिल्लपुरवास्तव्य श्रीप्राग्वाट ज्ञातीय ठ० श्रीचंडप ठ० श्री चं(*)डप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराजसुत महं० श्रीमल्लदेव महं० श्रीवस्तुपालयोरनुज महं० श्रीतेजःपालेन कारित श्रीलूणसीहवसहि(*)कायां श्रीनेमिनाथदेवचैत्ये जगत्यां चंद्रावतीवास्तव्य प्राग्वाटज्ञातीय महं० कउडि सुत श्रे० साजणेन स्वपितृव्यक सुत भ्रातृ वरदेव। कडुआ। धाम (*) देव। सीहड। तथा भ्रातृज आसपाल प्रभृति कुटुंब सहितेन श्रीनागेंद्रगच्छे श्रीविजयसेनसूरिप्रातिष्ठितऋषभ-

देवप्रतिमालंकृता देवकुलिकेयं कारिता ॥ छ ॥ (*) बाइ देवइ । तथा रतनिणि । तथा झणकू । तथा वडग्रामवास्तव्य प्राग्वाटज्ञातीय व्यव० मुणचंद्रभार्या लीबिणि मांटवास्तव्य व्यव० जयता । आंबवीर । वियइपाल । (*) दुती वीरा । साजणभार्या जालू । दुती सरसइ श्रीवडगच्छे श्रीचक्रेस्व(श्व)रसूरिसंतानी [य] स्रा(श्रा)वक साजणेन कारिता ॥

( ८६ )

दं० ॥ संवत् १२८७ वर्षे चैत्र वदि ३ प्राग्वाटज्ञातीय श्रीचंडप श्रीचंडप्रसाद श्रीसोमान्वये ठ० श्रीआसरा[ज]सुतमहं[०] श्रीतेजपालेन श्रीअर्बुदाचले कारितश्रीलूणसीहवसहिकाया (यां) श्रीनेमिनाथदेवचैत्ये धवलकक्वास्तव्य श्रीश्रीमालज्ञातीय ठ० वीरचंद्रां(*)गज महं० रतनसीहसुत दोसिक ठ० पदमसीहेन स्वकीयपितुः महं० रतनसीहस्य स्वकीयमातुः महं० नेंनांगज महं० वीजा सुता कुमरदेव्याश्च श्रेयोर्थं देवश्रीसंभवनाथसहिता देवकुलिका कारिता समस्ति ॥ छ ॥

( ८७ )

संवत् १२९० वर्षे प्राग्वाटवंशीय महं० श्रीसोमान्वये महं० श्रीतेजपालसुत महं० लूणसीहभार्यारयणादेविश्रेयोऽ(*)र्थं महं० श्रीतेजपालेन देवकुलिका कारिता ॥ छ ॥ शुभं भवतु ॥

( ८८ )

दं० ॥ संवत् १२९० वर्षे महं० श्रीसोमान्वये महं० श्रीतेजपालसुत महं० श्रीलूणसीहभार्या महं० श्रीलषमादेविश्रेयोऽर्थं महं० तेजपालेन देवकुलिका कारिता ॥

( ८९ )

र्द० ॥ श्रीनृपविक्रमसंवत् १२९० वर्षे श्रीपत्तनवास्तव्यप्राग्वाटवंशीय महं० श्रीचंडप श्रीचंडप्रसाद महं० श्रीसोमान्वये महं० श्रीआसरा[ज]सुत महं० श्रीमालदेव भ्रातृ महं० श्री (*) वस्तपालयोरनुज महं० श्रीतेजपालेन स्वकीयभार्या महं० श्रीअनुपमदेविश्रेयोऽर्थं देवश्रीमुनिसुव्रतस्य देवकुलिका कारिता ॥ छ ॥

( ९० )

श्रीनृपविक्रमसंवत् १२९० वर्षे प्राग्वाटज्ञातीय महं० श्रीचंडप श्रीचंडप्रसाद श्रीसोम महं० श्रीआसरा[जा]न्वयसमुद्भव महं० श्रीतेजपालेन स्वसुता वउलदेविश्रेयोऽर्थं देवकुलिका कारिता ॥

( ९१ )

॥ संवत् १२९० वर्षे प्राग्वाटज्ञातीय महं० श्रीचंडप श्रीचंडप्रसाद श्रीसोम श्रीआसरा[जा]न्वयसमुद्भूत महं० श्रीतेजपालेन स्वसुतश्रीलूणसीहसुता गउरदेविश्रेयोऽर्थं देवकुलिका कारिता ॥ छ ॥

( ९२ )

॥ र्द० ॥ स्वस्ति श्रीनृपविक्रमसंवत् १२९३ वर्षे वैशाखशुदि १४ शुक्रे अद्येह श्रीअर्बुदाचलमहातीर्थे श्रीअणहिल्लपुरवास्तव्य श्रीप्राग्वाटज्ञातीय ठ० श्रीचंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराजसुत महं० श्रीमल्लदेव महं० श्रीवस्तुपालयोरनुज ( * ) महं० श्रीतेजःपालेन कारित श्रीलूणसीहवसहिकायां श्रीनेमिनाथदेवचैत्ये जगत्यां चंद्रावतीवास्तव्य प्राग्वाटज्ञातीय श्रे०

सांतणाग श्रे० जसणाग पुत्र सोहिय । सांवत । वीरा । सोहिय पुत्र आंबकुमार । गागउ । सावतपुत्र पूनदेव । वाला । वीरापुत्र देवकुमार । शुभ । ब्रह्म (*) देव । देवकुमार पुत्र वर देव । पाल्हण । पुत्री देल्ही । आल्ही । ललनू । संतोस । ब्रह्मदेव । पुत्र बोहडि पुत्री तेजू । वरदेवपुत्रकुंअरा । पाल्हणपुत्र जला । सोमा । पुत्री सीनू । कुंवरापुत्र आंवड । पुनड । पुत्री नीभल । रूपल । श्रे० वरदेवश्रेयोर्थं कुमराकेन श्रीनागेंद्रगच्छे पूज्यश्रीहरि (*)भद्रसूरि-शिष्य श्रीमद्विजयसेनसूरि प्रतिष्ठित श्रीनेमिनाथदेवालंकृता देव-कुलिकेयं कारिता ॥ छ ॥

( ९३ )

स्वस्ति श्रीनृपविक्रमसंवत् १२९३ वर्षे वैशाखसुदि १५ शनौ श्रीअर्बुदाचलमहातीर्थे( र्थे ) अणहिल्लपुर वास्तव्य श्रीप्रा(*)ग्वाट ज्ञातीय ठ० श्रीचंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआशाराजसुत महं० श्रीमल्लदेव महं० श्रीवस्तपा(*)-लयोरनुज महं० तेजःपालेन कारित श्रीलूणसीहवसहिकायां श्रीने-मिनाथदेवचैत्ये जगत्यां चंद्रावतीवास्तव्य(*)प्राग्वाटज्ञातीय श्रे० पासिलसंताने वील्हलभार्या साधू तत्पुत्र मुणिचंद्र श्रीकुमारसीह कुमारपाल्हण । श्रीकुमारपुत्र वी(*)ल्हा आंब माउ आसधर वील्हापुत्र पासदेव तत्पुत्र आमदेव आसचंद्र श्रे० पाल्हणभार्या सील्ह तत्पुत्र आसपाल मांटी पा(*)ल्हणेन आत्मश्रेयोऽर्थं श्रीना-गेंद्रगच्छे श्रीविजयसेनसूरि ........................ प्रतिमा-लंकृता देवकुलिकेयं कारिता ॥ छ ॥

( ९४ )

॥ र्द० ॥ स्वस्ति श्रीविक्रमनृपात् सं० १२९३ वर्षे चैत्र

वदि ८ शुक्रे अद्येह श्रीअर्बुदाचलतीर्थे स्वयं कारित श्रीलूणसिंहवसहिकाख्य श्रीनेमिनाथदेवचैत्ये जगत्यां श्रीप्राग्वाटज्ञातीय ठ० चंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराज भार्याश्रीकुमारदेव्योः सुत महं० श्रीमालदेव संघपति श्रीवस्तुपालयोरनुज महं० श्रीतेजःपालेन स्वभगिन्या बाई झालहणदेव्याः श्रेयोऽर्थं विहरमानतीर्थंकर श्रीमंधरस्वामीप्रतिमालंकृता देवकुलिकेयं कारिता प्रतिष्ठिता श्रीनागेंद्रगच्छे श्रीविजयसेनसूरिभिः ॥छ॥

( ९५ )

स्वस्ति श्रीविक्रमनृपात् सं० १२९३ वर्षे चैत्र वदि ८ शुक्रे अद्येह श्रीअर्बुदाचलतीर्थे स्वयं कारित श्रीलूणसीहवसहिकाख्य श्रीनेमिनाथदेवचैत्ये जगत्यां श्रीप्राग्वाटज्ञातीय ठ० चंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराज भार्याकुमारदेव्योः सुत महं० श्रीमालदेव संघपति श्रीवस्तुपालयोरनुज महं० श्रीतेजःपालेन स्वभगिनी बाई माउश्रेयोऽर्थं विहरमानतीर्थंकर श्रीयुगंधरस्वामिजिनप्रतिमालंकृता देवकुलिकेयं कारिता ॥ छ ॥

( ९६ )

स्वस्ति श्रीविक्रमनृपात सं० १२९३ वर्षे चैत्र वदि ८ शुक्रे अद्येह श्रीअर्बुदाचलतीर्थे स्वयं कारित श्रीलुणसीहवसहिकाख्य श्रीनेमिनाथदेवचैत्ये जगत्यां श्रीप्राग्वाटज्ञातीय ठ० चंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराज भार्या श्रीकुमारदेव्योः सुत महं० श्रीमालदेव संघपति श्रीवस्तुपालयोरनुज महं० श्रीतेजपालेन स्वभगिन्या[ः] साउदेव्या[ः] श्रेयोऽर्थं विहरमानतीर्थंकर श्रीबाहुजिनालंकृता देवकुलिकेयं कारिता ॥छ॥

( ९७ )

स्वस्ति श्रीविक्रमनृपात् सं० १२९३ वर्षे चैत्र वदि ८ शुक्रे अद्येह श्रीअर्बुदाचलतीर्थे स्वयंकारित श्रीलूणसीहवसहिकाख्य श्रीनेमिनाथदेवचैत्ये जगत्यां श्रीप्राग्वाटज्ञातीय ठ० चंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराज भार्याश्रीकुमारदेव्योः सुत महं० श्रीमालदेव संघपति श्रीवस्तुपालयोरनुज महं० श्रीतेजपालेन स्वभगिन्या बाई धणदेवीश्रेयसे विहरमानतीर्थंकर श्री[सु]बाहुबिंबालंकृता देवकुलिकेयं कारिता ॥

( ९८ )

॥ ई० ॥ स्वस्ति श्रीनृपविक्रमसंवत् १२९३ वर्षे चैत्र वदि ८ शुक्रे अद्येह श्रीअर्बुदाचलमहातीर्थे स्वयं कारित श्रीलूणसीहवसहिकाख्य श्रीनेमिनाथदेव(*)चैत्यजगत्यां श्रीप्राग्वाटज्ञातीय ठ० श्रीचंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराज ठ० श्रीकुमारदेव्याः सुत महं० श्रीमालदेव संघप-(*)ति महं० श्रीवस्तुपालयोरनुज महं० श्रीतेजःपालेन स्वभगिन्या बाई सोहगायाः श्रेयोर्थं शाश्वताजिनऋषभदेवालंकृता देवकुलिका कारि[ता] ॥

( ९९ )

॥ ई० ॥ स्वस्ति श्रीनृपविक्रम स(सं)वत् १२९३ वर्षे चैत्र वदि ८ शुक्रे अद्येह श्रीअर्बुदाचलमहातीर्थे स्वयं कारित श्रीलूणसीहवसहिकायां श्रीनेमिनाथदेवचैत्ये जगत्यां (*)॥ श्रीप्राग्वाटजावी(ती)य ठ० श्रीचंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्री-

आसराज ठ० श्रीकुमारदेव्योः सुत महं० श्रीमालदेव महं० श्री-
वस्तुपालयोरनुज महं० (*) श्रीतेजःपालेन स्वभगिन्या बाई वय-
जुकायाः श्रेयोर्थं श्रीवर्द्धमानाभिधशाश्वताजिनप्रतिमालंकृता देव-
कुलिकेयं कारिता ॥ शुभं भवतु ॥ मंगलं महाश्रीः ॥

( १०० )

श्रीनृपविक्रम संवत् १२९३ वर्षे चैत्र वदि ८ शुक्रे अद्येह
चंद्रावत्यां श्रीप्राग्वाटज्ञातीय ठ० चाचिगसत्क भार्या ठ० चाचि-
णि सुत राघदेव तत्भार्या साभीय सुत उदयपाल तत्भार्या अहि-
वदेवी सुत महं० आसदेव तत्भार्या महं० सुहगदेवी तथा भ्रातृ ठ०
भोजदेवस्तत्भार्या ठ० सुमल तथा भ्रातृ महं० आणंद तद्भार्या महं०
श्रीछडया आत्मीयमातापिताभ्यां पूर्वपुरुषाणां प्रभृति श्रेयोऽर्थं
अस्यां देवकुलिकायां श्रीतीर्थंकरदेवप्रतिमा कारिता । मंगलं
महाश्रीः ॥ छ ॥

( १०१ )

र्द० ॥ श्रीनु(नृ)पविक्रम संवत् १२९३ वर्षे चैत्र वदि ८ सुक्रवि
(शुक्राव)द्येह चंद्रावत्यां श्रीप्राग्वाटान्वये पूर्व्वपुरुषाणां प्रभृति महं०
श्रीअजितान्नृ(न्व?)ये व(त)त्सुत महं[०] श्रीआभट तत्स(सु)त महं[०]
श्रीसं(*)तीम तत्सुत महं० श्रीसोभनदेवस्तद्भार्या महं० श्रीमाउ(?)यं
तत्सुता ठ० श्रीरतनदेव्यो(व्या) आत्री(त्मी)या माता श्रेयोऽर्थं महं०
श्रीलूणसीहवसहिकायां श्रीनेमिनाथदेव(*) चैत्ये अस्यां देवकु-
लिकायां श्रीपार्श्वनाथदेव प्रतिमा कारिता ॥

स श्रीतेजपालः सचिवश्चिरकालमस्तु तेजश्वी(स्वी) ।
येन जना निश्चिताश्चिंतामणिनेव नंदंति ॥

( १०२ )

दं० ॥ श्रीनृपविक्रम संवत् १२९३ वर्षे चैत्र वदि ७ अद्येह श्री-अर्बुदाचलमहातीर्थे स्वयं कारित श्रीलूणसीहवसहिकाख्यश्रीनेमि-नाथदेवचैत्ये जगत्यां महं० श्रीतेजःपालेन(*) मातुलसुत भाभा रा-जपालभणितेन स्वमातुलस्य महं० श्रीपूनपालस्य तथा भार्या महं० श्रीपूनदेव्याश्च श्रेयोऽर्थं अस्यां देवकुलिकायां श्रीचंद्राननदेवप्रति-मा कारिता ॥

( १०३ )

दं० ॥ श्रीनृपविक्रमसंवत् १२९३ चैत्रवदि ७ श्रीअर्बुदाचल-महातीर्थे प्राग्वाटज्ञातीय ठ० श्रीचंडप ठ० श्रीचंडप्रसाद महं० श्रीसोमान्वये ठ० श्रीआसराजसुत(*) महं० श्रीमालदेव महं० वस्तुपालयोरनुज महं० श्रीतेजःपालेन स्वभगिन्याः पद्मलायाः श्रेयोर्थं श्रीवारिसेणदेवालंकृता देवकुलिकेयं कारिता ।

( १०४ )

दं० ॥ संवत् १२८८ श्रीश्रीमालज्ञातीय ठ० राणासुतेन ठ० यशो.......... कुक्षिसंभवेन ठ० साहणीयेन स्वपुत्रस्य ठ० सु-हागदेविकुक्षिसंभूतस्य(*) ठ० सीहडस्य श्रेयोऽर्थं श्रीयु[गा]दिजि-नबिम्बमिदं कारितमिति शुभं भूयात् ॥

( १०५ )

दं० ॥ श्रीनृपविक्रमसंवत् १२८७ वर्षे चैत्रवदि ७ अद्येह श्रीअर्बुदाचलमहातीर्थे प्राग्वाटज्ञातीय श्रीचंडप श्रीचंडप्रसाद श्री-सोमान्वये श्रीआसराजसुत महं० श्रीमाल(*)देव तथानुज महं०

श्रीवस्तुपाल महं० श्रीतेजपालेन कारित श्रीलूणिगवसहिकायां श्रीनेमिनाथचैत्ये श्रीमालज्ञातीय श्रे० चांदा सुत भोजा सुत श्रे० खेतलेन स्वमातुः श्रे० जासू(*)श्रेयोऽर्थं श्रीअजितस्वामिदेवसत्क-प्रतिमेयं कारिता ॥

(१०६)

र्द० ॥ संवतु (त्) १२९१ वर्षे मार्गसीर्षमासे श्रीअर्बु-दाचले महं[०]श्रीतेजपाल कारित ठ० लूणसीहवसहिकाभिधान श्रीनेमिनाथचैत्ये श्रीरिषभश्रीसंभवदेवकुलिकाबिंबदंडकलसादिस-हिता श्रीनागपुरे(*) पूर्वं साधुवरदेव आशी(सी)त् । यन्नाम्ना वरहुडिया इत्याम्नायः प्रसिद्धः ॥ तत्सुतौ सा० आसदेव लक्ष्मी-धरौ । आसदेवसुत सा० नेमड । आभट । माणिक । सलपण । लक्ष्मीधरसुतास्तु थिरदेव । गुणधर । जगधर(*)भुवणाभिधानाः । ततः साहुनेमडपुत्र । सा० राहड । जयदेव । सा० सहदेवाख्याः । तत्र सा० राहडपुत्र जिणचन्द्र । दूलह । धणेसर । लाहड । अभ-यकुमार संज्ञाः । सा० जयदेवपुत्र वीरदेव । देवकु(*)मार । हालू-नामानः । सा० सहदेव पुत्रौ सा० खेढागोसलौ । इत्येवमादि-समस्तनिजकुं(कु)टुम्बसमुदायसहितेन । सा० सहदेवेन शुद्धश्रद्धया कर्म्मनिर्ज्जरार्थमियं कारिता । शिवमस्तु ॥

(१०७)

॥ र्द० ॥ संवत् १२९१ वर्षे मार्गशीर्ष मासे श्रीअर्बुदाचले महं० श्रीतेजपालकारितलूणसीहवसहिकाभिधान श्रीनेमिनाथचैत्ये श्रीनेमिनाथदेव श्रीअभिनंदन श्रीशांतिदेवकुलिका बिंबदंडकलसा(शा)दिसहिता ।

श्रीना(*)गपुरवास्तव्य । सा० वरदेवआशी(सी)त्। यन्नाम्ना वरहुडिया इत्याम्नायः प्रसिद्धः । तत्सुतौ सा० आसदेवलक्ष्मीधरौ । आसदेव सुत नेमढ आभट माणिक सलषण। लक्ष्मीधरसुतास्तु । थिरदेव । गुणधर । जग(*)धर भुवणाभिधानाः । ततः सा० नेमडपुत्र । सा० राहड जयदेव । सा० सहदेवाख्याः । तत्र साहु राहडपुत्र । जिणचंद्र । दूलह । धणेसर । लाहड अभयकुमार संज्ञाः । सा० जयदेव सुत वीरदेव देवकुमार हालुनामान[:] (*) सा सहदेवपुत्रौ खेढागोसलौ इत्येवमादिसमस्तनिजकुं(कु)टुम्ब समुदायसहितेन । सा० राहडपुत्र । जिणचंद्र धनेश्वर । लाहड । माता वरी नाईक । वधू । हरियाही श्रेयोर्थं शुद्धश्रद्धया कर्म्मनिर्ज्जरार्थं इयं कारिता ॥

( १०८ )

र्द० ॥ स्वस्ति श्रीविक्रमनृपात् संवत् १२९१ वर्षे ॥
श्रीषंडेरकगच्छे महति यशोभद्रसूरिसंताने ।
श्रीशांतिसूरिरास्ते तच्चरणांभोजयुगभृंगः ॥ १
वितीर्ण्णधनसंचयः क्षतविपक्षलक्षाग्रणीः
कृतोरुगुरुरैवतप्रमुखतीर्थयात्रोत्सवः ।
दधत्क्षितिभृतां मुदे विशदधीः स दुःसाधता(*)-
मभूदुदयसंज्ञया त्रिविधवीरचूडामणिः ॥ २ ॥
तदंगजन्मास्ति कवींद्रबंधुर्म्मंत्री यशोवीर इति प्रसिद्धः ।
ब्राह्मीरमाभ्यां युगपद्गुणोत्थविरोधशांत्यर्थमिवाश्रितो यः ।३।
तेन सुमतिना जिनमतनिपुणेन श्रेयसे पितुरकारि ।
श्रीसुमतिनाथबिंबेन संयुता देवकुलिकेयं ॥ ४ ॥ छ ॥

( १०९ )

॥ ई० ॥ स्वस्ति श्रीविक्रमनृपात् संवत् १२९१ वर्षे ॥
श्रीषंडेरकगच्छे महति यशोभद्रसूरिसंताने ।
श्रीशांतिसूरिरास्ते तच्चरणसरोजयुगभृंगः ॥ १
वितीर्णधनसंचयः क्षतविपक्षलक्षाग्रणीः
कृतोरुगुरुरैवतप्रमुखतीर्थयात्रोत्सवः ।
दधत्क्षितिभृतां मुने( )विंशदधीः स दुःसाधना-
मभूदुदयसंज्ञया त्रिविधवीरचूडामणिः ॥ २ ॥
तदंगजन्मास्ति कवींद्रबंधुर्म्मंत्री यशोवीर इति प्रसिद्धः ।
ब्राह्मीरमाभ्यां युगपद्गुणोत्थविरोधशांत्यर्थमिवाश्रितो यः॥३॥
तेन सुमतिना मातुः श्रेयोर्थं कारिता कृतज्ञेन ।
श्रीपद्मप्रभ(*)बिंबालंकृतसद्देवकुलिकेयं ॥ ४ ॥
॥ छ ॥ ६०३ ॥ छ ॥

( ११० )

संवत् १२९७ वर्षे वैशाख वदि १४ गुरौ प्राग्वाट् ज्ञातीय चंडप चंडप्रसाद महं० श्री.................................................

....................................................................................................

सा सुतायाः ठकुराज्ञीसंतोषाकुक्षिसंभूताया महं० श्रीतेजःपाल-द्वितीयभार्या महं० श्रीसुहडादेव्याः श्रेयोऽर्थं एतत् त्रिगदेवकुलिका खत्तकं श्रीशांतिनाथबिंबं च कारितं ॥ छ ॥

( १११ )

संवत् १२९७ वर्षे वैशाख सुदि १४ गुरौ प्राग्वाट् ज्ञातीय

चंडप चंडप्रसाद महं० श्रीसोमान्वये महं० श्रीआसराजसुत महं० श्रीतेजःपालेन श्रीमत्पत्तनवास्तव्य मोढज्ञातीय ठ० झाल्हण सुत ठ० आसा सुतायाः ठकुराज्ञीसंतोषाकुक्षिसंभूताया महं० श्रीतेजःपालद्वितीयभार्या महं० श्रीसुहडादेव्याः श्रेयो........................................................................................

( ११२ )

तेजपाल राजपाल सुहडा नरपाल संवत् १३७९ वर्षे आषाढ वदि १० भोम श्रे०..........................................

( ११३ )

प्राग्वाट महं० सिरपाल भार्या संसारदेविपुत्रेन महं० वस्ताकेन स्वमातृपुण्यार्थं श्रीबिंबं का०

( ११४ )

प्राग्वाट ठ० मुंझाकेन श्रीमहावीरबिंबं [का०] प्र० श्रीज्ञानचंद्रसूरिभिः।

( ११५ )

सं० १३०२ वर्षे चैत्र वदि ११ सोमे प्राग्वाट [ ज्ञातीय ] चंद्रावतीवास्तव्य कुंअरा भार्या......श्राविकया कारि..........

( ११६ )

संवत् १३०२ फागुण सुदि ७ शुक्रे नाणास्थाने श्रे० कुलधर भार्या कवलसिरि सुहवसुत सहवदेव लूणसीह.......... वास्तव्य........................................................

( ११७ )

प्र० श्रीमाणिकसूरि पट्टे श्रीमाणदेवसूरिभिः । प्राग्वाट् श्रे० बीजड भा० मोटीपुत्रेण महणेन पित्रोः श्रेयसे नेमिबिंबं का० ।

( ११८ )

प्र० श्रीधर्मचंद्रसूरिभिः । हंडाउडा वास्तव्य प्राग्वाट् खोता भा० हसीरदे पु० झाझणखेमसिंहाभ्यां पित्रोः श्रेयसे का० ।

( ११९ )

सं० १३७९ वर्षे वैशाख सुदि प्राग्वाट् ज्ञातीय नंदिग्राम-वास्तव्य श्रे०.......सीहसुत पूपा कोलाकेन श्रीपार्श्वनाथबिंबं [ कारितं ] ।

( १२० )

सं० १३७९ वर्षे मार्ग सुदि १० मिसकण (?) नेमा नरदेव वहिण धाघी साड.........श्रेयोर्थं श्रीआदिनाथबिंबं कारितं ।

( १२१ )

संवत् १२९३ वर्षे मार्ग सुदि १० श्रीनागपूरीय वरहुडि संतानीय सा० नेमडपुत्र सा० सहदेवेन स्वपुत्रस्य सौ[ख्यार्थं] सुहागदेविकुक्षिसंभूत सा० खेटा गोसलेन.........[लघुभ्रा-]तृ सा० राहडपुत्र जिनचंद्रेण च स्वमातृ वडी नाम्न्याश्च श्रेयोऽर्थं श्रीसंभवनाथबिंबं कारापितं प्रतिष्ठितं श्रीविजयसेनसूरिभिः ।

( १२२ )

संवत् १२९३ वर्षे मार्गसुदि १० श्रीनागपुरी[य] वरहुडिसंतानीय सा. नेमडपुत्र सा. राहडपुत्र जिनचंद्र पुत्र देवचंद्रेण दादी......चाहिणि श्रेयोऽर्थं श्रीआदिनाथबिंबं....................

( १२३ )

संवत् १२९३ वर्षे मार्गसुदि १० श्रीनागपुरी[य] वरहुडि संतानीय सा० नेमड पुत्र सा० जयदेव सा० वीरदेव देवकुमार हालू स्वमातृ साल्हणदेवि आत्मश्रे० श्रीमहावीरबिंबं कारापितं ।

( १२४ )

भगवंत महावीर पर्युपास्थि । संवत् १३८४ वर्षे चैत्रसुदि ३ भोमे कुंबउद्राग्रामे व्यव० श्रीजेसीह भार्या आल्हणदे सुत अभयचंद्र भार्या नामलसुत मलयसीह भार्या माणिक.......... स्थापितं ॥

( १२५ )

श्रीआदिनाथ पर्युपास्थि । संवत् १३८४ वर्षे चैत्रसुदि ३ भोमे कुंबरउद्राग्रामे व्यव० जेसीहसुत अभयचंद्र भार्या नामलसुत महं० मलयसीह भार्या माणिक.........बिंबं स्थापितं ॥

( १२६ )

संवत् १२९३ मार्ग सुदि १० श्रीनागपुरीय वरहुडिसंतानीय सा० नेमडपुत्र सा० राहडपुत्र सा० धनेश्वर लाहडेन

श्रीअभिनंदननाथबिंबं मातृ नायिकिः धनेश्वर भार्या धनश्री स्वात्मनो श्रेयोऽर्थं कारिता (तं) प्रतिष्ठिता (तं) श्रीनागेंद्रगच्छे श्रीविजयसेनसूरिभिः ॥ छ ॥

( १२७ )

संवत् १२९३ मार्ग सुदि १० नागपुरीय वरहुडिसंतानीय सा० नेमडपुत्र सा० राहड लाहडेन स्वभार्या लखाश्री श्रेयोर्थं नेमिनाथबिंबं कारितं प्रतिष्टितं श्रीविजयसेनसूरिभिः ॥

( १२८ )

सं० १३८९ वर्षे फागण सुदि ८ श्रीकोरंटकीयगच्छे महं० पुनसीह भार्या पुनसिरि सुत धाधलेन भ्रातृ मूलु गेहा रुदा.... सहितेन मुंडस्थल सत्क श्रीमहावीरचैत्ये निज मातृपितृ श्रेयोऽर्थं जिनबिंबं...................

( १२९ )

संवत् १५१५ वर्षे महा वदि ८ गुरौ श्रीअर्बुदाचले देउलवाडा वास्तव्य श्रीप्राग्वाट्ज्ञातीय व्य० लाहाभार्या वल्हीसुत...... भार्या रूपीनाम्न्या भ्रातृ व्य० आल्हण चाचग आल्हासुत व्य० लाखा भार्या देवी सुत खीमा मोकल..............राजीमती प्रतिमा कारिता। प्रतिष्ठिता श्रीतपागच्छे श्रीश्रीश्रीसोमसुंदरसूरिशिष्य श्रीमुनिसुंदरसूरि जयचंद्रसूरि शिष्य श्रीश्रीश्रीरत्नशेखरसूरिभिः........श्रीउदयनंदिसूरि श्रीलक्ष्मीसागरसूरि..............सूरि सहितैः ॥

( १३० )

सं० १५ ' ' श्रीमांडववास्तव्य ओसवाल ज्ञातीय सो० सांगण सो० सूरा सो० परम सो० धर्मा सो० हापा भा० वीनु तया(योः) सुत सो० वीधा भार्या[..............]सं० नेसा भार्या जसमादे तयो[:] सुतया संघवणि चंपाईनाम्न्या स्व श्रेयसे द्विः-सप्ततितीर्थंकरपट्ट[:] कारिता(तः) ॥ प्र० वृद्धतपापक्षे श्रीज्ञानसागर-सूरिभिः ॥ सोनी वीधा । संघविणि चंपाई ।

( १३१ )

( प्रथम हस्ति ) [ महं० श्रीचंडप । ]
( द्वितीय हस्ति ) महं० श्रीचंडप्रसाद ।
( तृतीय हस्ति ) महं० श्रीसोम ।
( चतुर्थ हस्ति ) महं० श्रीआसराज ।
( पंचम हस्ति ) [ महं० श्रीलूणिग । ]
( षष्ठ हस्ति ) [ महं० श्रीमल्लदेव । ]
( सप्तम हस्ति ) [ महं० श्रीवस्तुपाल । ]
( अष्टम हस्ति ) [ महं० श्रीतेजःपाल । ]
( नवम हस्ति ) [ महं० श्रीजैत्रसिंह । ]
( दशम हस्ति ) [ महं० श्रीलावण्यसिंह । ]

---

(१ हस्तिपृष्ठभागे) { १ आचार्यश्रीउदयसेन । २ आचार्यश्रीवि-जयसेन । ३ महं० श्रीचंडप । ४ महं० चापलदेवी । }

(२ ,, ,, ) १ महं० श्रीचंडप्रसाद । २ महं० चामलदेवी ।

(३ ,, ,, ) १ महं० श्रीसोम । २ महं० श्रीसीतादेवी ।

(४ ,, ,, ) १ महं० श्रीआसराज । २ महं० श्रीकुमारदेवी ।

(५ ,, ,, ) १ महं० श्रीलूणिगदेव । २ महं० लूणादेवी ।

(६ ,, ,, ) १ महं० श्रीमालदेव । { २ महं० श्रीलीलादेवी ।<br>३ महं० श्रीप्रतापदेवी ।

(७ ,, ,, ) १ महं० श्रीवस्तुपाल । { २ महं० श्रीललितादेवी ।<br>३ महं० श्रीवेजलदेवी ।

(८ ,, ,, ) १ महं० श्रीतेजःपाल । २ महं० श्रीअनुपमदेवी ।

(९ ,, ,, ) १ महं श्रीजयतसिंह । २ महं० श्रीजयतलदेवी ।

(१० ,, ,, ) { १ महं० श्रीलावण्यसिंह । २ महं० श्रीरूपादेवी ।<br>१ महं० श्रीसुहडसीह । २ महं० श्रीसुहडादेवी ।<br>३ महं० श्रीसलखणदेवी

# विमलवसति-गतप्रशस्तिलेखाः ।



( १३२ )

॥ ई० ॥ श्रीअर्बुदतीर्थप्रशस्तिर्लिख्यते ॥

अंगीकृताचलपदो वृषभासितोसि
भूतिर्गणाधिपतिसेवितपादपद्मः ।
शंभुर्युगादिपुरुषो जगदेकनाथः
पुण्याय पल्लवयतु प्रतिवासरं स [:] ॥ १ ॥ (*)

निबद्धमूलैः फलिभिः सपत्रै-
द्रु(द्रु)मैर्नरेंद्रैरिव सेव्यमानः ।
पादाग्रजाग्रद्बहुवाहिनीकः
श्रीअर्बुदो नंदतु शैलराजः ॥ २ ॥

यस्मिन् विशिष्टानलकुंडजन्मा
क्ष(क्षि)तिक्षतित्राणपरः पुरासीत् ।
प्रत्य( )र्थिसार्थोन्मथना[त्]कृतार्थी[2]
क्षिताविह श्रीपरमारनामा ॥ ३ ॥

तदन्वये कान्हडदेववीरः
पुराविरासीव(त्)प्रबल प्रतापः ।
चिरं निवासं विदिधान[3] यस्य
करांबुजे सर्वजगज्जयश्रीः ॥ ४ ॥

तत्कुलकमल(*)मरालः काल[:] प्रत्यर्थिमंडलिकाना[म्] ।
चंद्रावतीपुरीशः समजनि वीराग्रणीध(र्धं)धुः ॥ ५ ॥

---

१ 'वशिष्ठा-'स्यात् । २-'कृतार्थः' स्यात् । ३ 'विदधे' स्यात् ।

श्रीभीमदेवस्य नृपश(स्य) सेवा-
ममन्यमानः किल धंधुराजः।
नरेशरोषाच्च ततो मनश्री(स्वी)
धाराधिपं(*)भोजनृपं प्रपेदे ॥ ६ ॥
प्राग्वाटवंशाभरणं बभूव
रत्नं प्रधानं थि(वि)मलाभिधानः।
यस्तेजसा दुस(स्स)मयांधकार(रे)
मग्नोपि धर्म्मः सहसाविरासीत(त्) ॥ ७ ॥
तव(त)श्च भीमेन नराधिपेन
स प्रतापभूमिं(मि)र्विम(*)लो महामतिः।
क(कृ)तोबु(ऽर्बु)दे दंडपतिः सतां प्रियः
प्रियंवदो नंदतु जैनशासने ॥ ८ ॥
अशोकपत्रारुणपाणिपल्लवा
समुल्लसत्केसरशां(सिं)हवाहना ॥
शिशुद्वयालंकृतविग्रहा सती
सतां क्रि(*)याद्विघ्नविनाशमंबिका ॥ ९ ॥
अथान्यदा तं निशि दंडनायकं
समादिदेश प्रयता किलांबिका।
इहाचि(च)ले त्वं कुरु सद्म सुंदरं
युगादिभर्तुर्निरपायसंश्रयः ॥ १० ॥
श्रीविक्रमादित्यनृपाद् व्य(*)तीते-
ऽष्टाशीतियाते शरदां सहश्रे(स्रे)।
श्रीआदिदेवं शिखरे[ऽ]र्बुदस्य
निवेसि(शि)तं श्रीरि(वि)मलेन वंदे ॥ ११ ॥

विघ्नाधिव्याधिहंत्री या मातेव प्रणतांगिषु ।
श्रीपुंजराजतनया श्रीमाता भवतां श्रि(*)ये ॥ १२ ॥
अचलेशवशिष्टानलतटिनीमंदाकिनीविमलसलिला[नि]
पुण्यानि यस्य शृंने(गे) जयंवि(ति)विविधानि तीर्थानि ॥ १३ ॥

## ॥ अथ राजावली ॥

वैरिवर्ग्गदलने गततंद्रश्चाहुवामकुलकैरवचंद्रः ।
यो नदूलन(*)गरस्य नरेश आसराज इति वीरवरोऽभूत् ॥ १४ ॥
प्रबलवैरिदवानलवारिदः समरसिंह इति प्रथितस्ततः ।
महणसिंहभटः सुभटाग्रणीः पृथुयशा अजनिष्ट तदंगजः ॥ १५ ॥
प्रतापमल्लस्तदनु प्रता(*)पी बभूव भूपालसदस्सु मान्यः ।
वीरावतंसोऽजनि वीजडो[ऽ]स्य मरुस्थलीमंडलभूमिभर्ता ॥ १६ ॥

आसन् त्रयस्तत्तनया नयाढ्या
मूर्ताः पुमर्था इव भोगभोजः ।
आद्यो धरित्रीपतिरक्षपालः
ख्यातः क्षितो(तौ) लूणिग(*)नामधेय ॥१७॥

न्यायमार्गशिखरीमधुमासः कालवक्ष(त्क)वलयन्नरिव्रजम् ।
मंडलीकपदवी(द्वी)मपालहा(य)लुंढ इत्यभिधया धियां निधिः॥१८॥
विपक्षनारीनयनांबुपूरैश्चकार यः कीर्ति(*)लतां सपत्राम् ।
बभूव भूमिपतिलब्धमानो लुंभाभिधानो जगदेकवीरः ॥ १९ ॥
संहृत्य शत्रून् प्रबैलनुबलेन श्री अबु(र्बु)दं प्राप्य नगाधिराजम् ।
भुक्त्वा स भूमंडलराज्यमुच्चैः स्वर्लो(*)कलोकाधिपतिर्बभूव ॥२०॥

---

१ 'वशिष्ठा'-स्यात् । २ 'भोगभाजः' स्यात् । ३ 'प्रबलान्' स्यात् ।

लूणिगस्य तनुजो जगज्जयी तेजसिंह इति तेजसां निधिः।
यत्प्रतापदवपावकश्चिरं वैरिवर्गविपदं नहति स्म ॥ २१ ॥

करावग्रजाग्र[त्]करवा(*)लदंड-
खंडिकृताशेषविरोधिवर्गः।
पृथ्व्यां(थ्व्यां)प्रसिद्धस्तिहुणाकनामा
वीरावतंसः स चिरायुरस्तु ॥२२॥

श्रीमज्झुंभकनामा समन्वितस्तेजसिंह-तिगु(हु)णाभ्याम्।
अबु(र्बु)दगिरीश(*)राज्यं न्यायनि[धिः पालयामास ॥ २३ ॥]

[मंडोउर] पुरवासी सुगुरुश्रीधर्मसूरिपदभक्तः।
सर्वज्ञशासनरतः स जयति जेल्हाभिधः श्रेष्टी(ष्ठी) ॥ २४ ॥

तत्तनयः सुनयो[ऽ]भूत्(द्) चे(*)[ल्हा]कः सकलभू[तलख्यातः।]
तत्पुत्रः सुचरित्रः पुण्यनिधिः पारसः साधुः ॥ २५ ॥

सोही-देगा-देसल-कुलधरनाम्ना तदंगजा जाताः।
चत्वारः कुलमंदिरसुदृढस्तंभाभिरामास्ते(*) ॥ २६ ॥

श्रीदेसलः सुकृतपेसलवित्तकोटी-
श्चंचच्चतुर्दशजगज्जनितावदातः।
शत्रुंजयप्रमुखविश्रुतसप्ततीर्थे
यात्राश्चतुर्दश चकार महामहेन ॥२७॥

देमति-माई(*)-नाम्नी साधु श्रीदेसलस्य भार्ये द्वे।
निर्मलशीलगुणाढ्ये दयाक्षमे जैनधर्मस्य ॥ २८ ॥

देमतिकुक्षिप्रभवा गोसल-गयपाल-भीम-नामानः।
माईकुक्षेर्जातौ मोह(*)ण गोहाभिधौ पुत्रौ ॥ २९ ॥

जिनशासनकमलरविः साधुः श्रीगोसलो विशदकीर्तिः।
गुणरत्नरोहणधरा गुणदेवी प्रियतमा तस्य ॥ ३० ॥

सद्धर्मकर्म्मैकनिब(*)द्धबुद्धि-
स्तदंगजः श्रीधनसिंहसाधुः ।
भार्या तदीया सदया वदाज्ञा(न्या)
मान्या सतां धांधलदेविसंज्ञा ॥ ३१ ॥

साधोर्भी(र्भी)मस्य सुतो हांसलदेकुक्षिसंभवः श्रीमान् ।
म(*)हिमानिधिर्महौजा महामतिर्महणसिंहाख्यः ॥ ३२ ॥

मयणल्लदेवीवरकुक्षिशुक्ति-
मुक्तास्त्रयस्तत्तनया जयंति।
ज्येष्टो(ष्ठो) जगद्व्यापियशःप्रकाशः
साध्वग्रणीला(ला)लिग(*) साधुराजः ॥ ३३ ॥

आश्विनेयाविव श्रेष्टौ कनिष्टौ गुणशालिनौ ।
सीहा-लाषाभिधौ धर्मध्यानप्रवणमानसौ ॥ ३४ ॥

षद् सुता धनसिंहस्य मूर्ता(*)[इव प]ड्र्त्तवः ।
विश्वविश्वोपकारायावतीर्ण्णाः पृथ्वीतले ॥ ३५ ॥

तेषामाद्यः साधुवी(वी)जड इति विमलम(त)रयशःप्रसरः ।
गुणसागरः पिमधरः सज्ञ(ज्ज)न(*)मान्यः समरसिंहः ॥ ३६ ॥

राजसमाजश्रेष्ठो विख्यातो(तः) साधुविजपालः ।
निपुणमतिर्नरपालः सुकृतरतो वीरधवलाख्यः ॥ ३७ ॥

स्वपितृश्रेयसे(*) जीर्णोद्धारं ऋषभमंदिरे ।
कारयामासतुर्ल्लल्ल-वीजडौ साधुसत्तमो(मौ) ॥ ३८ ॥

वादिचंद्र-गुणचंद्रविजेता
भूपतित्रयविबोधविधाता ।
धर्म्मसूरि(*)रिति नाम पुरासीत(द्)
विश्वविश्वविदितो मुनिराजः ॥ ३९ ॥

मूलपट्टक्रमे तस्य धर्मघोषगणार्यमा( म्णः ) ।
बभूवुः शमसंपूर्णा अमरप्रभसूरयः ॥ ४० ॥ (*)

तत्पट्टभूषणमदूषणधर्मशीलः
सिद्धांतसिंधुपरिशीलनविष्णुलीलः
श्रीज्ञानचंद्र इति नंदतु सूरिराजः
पुण्योपदेशविधिबोधितस(*)त्समाजः ॥ ४१ ॥

वसु-मुनि-तु(गु)ण-शसि(शि) वर्ष(र्षे)
ज्येष्टे(ष्ठे) सिति नर(व)मिसोमयुतदिवसे ।
श्रीज्ञानचंद्रगुरुणा
प्रतिष्टि(ष्ठि)तोऽर्बुदगिरौ ऋषभः ॥ ४२ ॥

(*)१३७८ ज्येष्ट(ष्ठ)सुदि ९ सोमे ॥



( १३३ )

॥ दें० ॥ संवत् १३५० वर्षे माघ सुदि १ भौमेऽद्येह श्रीमदणहिल्लपाटकाधिष्टि(ष्ठि)त परमेश्वर परमभट्टारक उमापतिवरलब्धप्रौढप्रतावा(पा)क्रांतदि( * )क्चक्रपा( वा )लक्ष्मापालमालवेश वि(व)रुथ(थि)नीगजघटाकुंभस्थलविदारणैकपंचानन समत्त(स्त) राजावलीसमलंकृतआभिनवसिद्धराजमहारा(*)जाधिराज श्रीश्रीमत्सारंगदेवकल्याणविजयराज्ये तत्पादपद्मोपजीवनि(जीवि) महामात्य श्रीवाधूये श्रीश्रीकरणादिसमस्तमुद्राव्यापारान् परि(*)पंथयति सतीत्येवं काले प्रवक्त(वर्त)माने अस्यैव परमप्रभो[:]प्रसादपत्तलायां भुज्यमानअष्टादशशतमंडले महाराजकुलश्रीवीसलदेव शा(*)सनपत्रं प्रयच्छन्ति यथा ॥ स एष महाराजकुलश्रीवीसलदेवः

संवत् १३५० वर्षे म(मा)घ सुदि १ भौमे ऽद्येह श्रीचंद्रावत्यां ओसवाल ज्ञातीय सा(*)धु श्रीवरदेवसुत साधु श्रीहेमचंद्रेण तथा महा० भीमा महा० सिरधर श्रे० जगसीह श्रे० सिरपाल श्रे० गोहन श्रे० वस्ता महं० विरपाल प्रभृति स(*)मस्तमहाजनेन भक्त्याराध्यविज्ञप्तेन श्रीअर्बुदस्योपरिसंतिष्ट(ष्ठ)मानवसहिकाद्वये निश्रयमाणघनतरकरं मुक्त्वा उद्य(?) कृतकरस्य शासनपत्रं(*)प्रयच्छति यथा ॥ यत् श्रीविमलवसहिकायां श्रीआदिनाथदेवेन श्रीमातादेव्या सत्क तलहडाप्रत्ययं उद्य देय द्र २८ अष्टविंशति द्रम्माः तथा श्रीअर्बुदे(*)त्यठकुरसेहलथतलारप्रभृतीनां कापडां प्रत्ययं उद्य देय द्र १६ षोडश द्रम्माः तथा कल्याणके अमीषां दिन द्वये दिनं प्रति देय कणह(ह)तां १० दश दा(*)तव्यानि। तथा महं० श्रीतेजपालवसहिकायां श्रीनेमिनाथदेवेन श्रीमातादेव्या सत्क वर्ष प्रतिदेय द्र १४ चतुर्दश द्रम्मा तथा दिनैकेन कणहूतां(*)देय १० दश तथा श्रीअर्बुदेत्य ठकुर सेलहथ तलार प्रभृतीनां कापडां प्रत्ययं देय द्र ८ अष्टौ द्रम्मा तथा प्रमदाकुलसक्त नामां ६ षट् नामकं प्रति(*)मल प्रत्ययं द्र ५ पंच द्रम्मा·······

··········वर्षप्रति दातव्या तथा वसहिकाद्वये पूजारकानां पार्श्वात् निष(श्र)यमाणकरो मुक्तो भणित्वा श्रीअर्बुदेत्य ठ(*)कुरेण सेलहथतलारप्रभृतिभि[ः] किमपि न याचनीयं न गृहीतव्यं च। अस्य (न्य?) दिन पूर्वं वसहिकाद्वयपार्श्वात् उपरिलिखितविधे ऊर्ध्वं श्रीअर्बुदे(*)त्य ठकुरेण सेलहथतलारप्रभृतिभिः तथा चंद्रावत्या श्रीमद्राजकुलेन महंतकसेलहथतलारडोकराप्रभृतिभि त्य(यत्)किमपि न याचनीयं न(*)गृहीतव्यं च। अनया परयित विधिना प्रतिवर्षं वसहिकाद्वयपार्श्वात् ग्राम ठकुर

प्रभृतिभि गृह्यमानैः कल्याणकप्रभृतिमहोत्सवेषु समाया(*)तसमस्त-संघस्य महरक- तलारकप्रभृतिकं रूढ्य सर्वं करणीयं काराप-पनीयं च ॥ ऊपरिचाटितउत्तीर्यमानसमस्तसंघमध्यात् यस्य कस्यापि किं( * )चित् गच्छति तत्सर्वं श्रीअर्बुदेत्यठकुरेण लोहमयं रूढ्या समर्प्पनीयं अस्मत्वंशजैरपि अन्यैश्च भाविभोक्तृभि राजाभिः वसाहिकाद्वये उ(*)घकृतकरोयं आचद्रार्कं यावत् अर्प्यतव्य पालनीयश्च । उक्तं च । भगवता व्यासेन बहुभिर्वसुधा भुक्ता राजाभिः सगरादिभिः यस्य यस्य यदा(*) भूमिस्तस्य तस्य तदा फलं । वंध्याटवीष्णतोयाषु शुष्ककाटेरवा-शिनः कृष्णसर्पा प्रजायंते देवदायोपहारिणः । न विषं विषमि-त्याह(*) देवस्वविषमुच्यते विषमेकाकिनं हंति देवस्वं पुत्रपौत्रकं एतानि स्मृतिवाक्यानि अवलोक्य अस्मुतवंशैः अन्यवंशैरपि भा-विभो(*)क्तृभिः अस्मत्कृतद्य उद्य(?)करस्यास्य प्रतिबंधः क-दापि न करणीय । न कारापनीयश्च । यथा दत्वा च इदमुक्तवान् मन्यं स्या अन्यवंश्या वा ये भ(*)विश्यंति पार्थिवा तेषामहं कर-लग्नोमि मंमदत्तं न लुप्यता ॥ ठ० जयतासिह सुत० पारि० पेथाकेन लिखित ॥ हीनाक्षरं प्रमाणमिति ॥(*)महाराजकुल श्रीवीसल-देव डू० महं सागण ॥ अत्र साक्षिणः श्रीअचलेश्वरदेवीयराउ० नंदि श्रीवसिष्टदेवीय तपोध(*)न·········अंबादेव्यासक्तं अबो० नीलकंठः । प्रमाणाग्रामीयपळ्या राजाप्रभृति समस्तपळ्यार ॥ सूत्र नर · · · · ·

( १३४ )

सं. १३७८ श्रीमांडव्यपुर वास्तव्य सा० माहिधर पुत्र

रुला मेघा भार्या रिहमासिरी पु० धीरपालहीराभ्यां पितृमातृश्रेयोऽर्थं कारितं प्र० श्रीधर्मघोषसूरिपट्टे श्रीज्ञानचंद्रसूरिभिः ॥

( १३५ )

सं. १२०२ आषाढ सुदि ६ सोमे श्रीप्राग्वाटवंशे आसदेव-देवकीसुताः महं० बहुदेव धनदेव सूमदेव जसबु रामणाख्याः [बन्धः?] वः । महं० धनदेवश्रेयोऽर्थं तत्सुत[वालण]धवलाभ्यां धर्मनाथप्रतिमा कारिता श्रीककुदाचार्यैः प्रतिष्ठिता ॥

( १३६ )

राणानंदि पुत्र श्रे० ठाकुर भार्या हासु श्रे० पु० भीमदेव भावदेवाभ्यां पितृश्रेयसे पार्श्वनाथः का० प्र० श्रीधर्मघोषसूरि-पट्टे श्रीज्ञानचंद्रसूरिभिः ॥

( १३७ )

सं० १३०८ वर्षे माघ सुदि ६ गुरौ धर्कटवंशीय श्रेष्टि.... पुत्र श्रीवच्छ भार्या धनसिरि पुत्र आमवीर भार्या पुत्र अ-हैवं(?) श्रे० आमसीहेन आत्ममातापिताश्रेयोर्थं श्रीआदिनाथबिंबं कारितं प्रतिष्ठितं श्री........शिष्यैः श्रीअमरचंद्रसूरिभिः ॥

( १३८ )

सं० १३७८ सुराणा[गोत्रे] सा० गुणधर पुत्र सा० रा-ह्लणपुत्र सा० जिणदेव हेमा जसदेव रामणैः मातृ पितृश्रेयसे श्री-शांतिनाथबिंबं का० प्र० धर्मघोषसूरिपट्टे श्रीज्ञानचंद्रसूरिभिः ॥

( १३९ )

सं० १२०२ आषाढ सुदि ६ सोमे श्रीप्राग्वाटवंशे आस-देवसुतस्य धनदेवस्य पत्न्याः श्रे० वोल्हा शीलाई सुता शांति-मत्याः श्रेयोऽर्थं तत्सुत महं० वालणधवलाभ्यां श्रीशांतिनाथ-प्रतिमा कारिता श्रीककुदाचार्यैः प्रतिष्ठितेति ॥

( १४० )

संवत् १३७८ वर्षे ज्येष्ठ वदि ९ सोम दिने श्रीयुगादि [जिनचैत्य]जीर्णोद्धारे अस्मिन् देहरिकायां श्रीवर्द्धमानप्रभृति बिंबानि..................कुमल सुत महं० पुनसीहेन कारापितानि पुत्र रिहा धांधल मूलू गेहा सदा सहितेन महं० भ्रातृ पेथड पुत्र षा-(बा?) हड सहितेन..................

( १४१ )

सं० १३७८ वर्षे सुराणा[गोत्रे] नाला पुत्र चेना भार्या देवश्री पुत्र पेथा पुना हाला लोलाकेन मातृपितृश्रेयसे का० श्री-धर्मसूरिपट्टे श्रीज्ञानचंद्रसूरीणां उपदेशेन ॥

( १४२ )

सं० १३७८ वर्षे सूराणागोत्रे कुलधर पुत्र सा० थिरदेव भार्या थेही पुत्र देपाल बधा हरिचंद्र पदा कर्मसीह प्रभृति समुदा-येन थिरदेवश्रेयसे जीर्णोद्धारः कारितः । श्रीज्ञानचंद्रसूरि प्र० ।

( १४३ )

सं० १२०२ वर्षे आषाढ सुदि ६ सोमे सूत्र० सोढा साई

सूत सूत्र० केला वोल्हा सहव लोयपा वागदेव्यादिभिः श्रीविमल-वसतिकातीर्थे श्रीकुंथुनाथप्रतिमा कारिता श्रीककुदाचार्यैः प्रतिष्ठिता ॥ मंगल महाश्रीः ॥ छ ॥

( १४४ )

सं० १३७८ वर्षे प्राग्वाटज्ञातीय म० वीजडसुतेन ठ० वयजलेन धरणिग जिणदेव सहितेन ठ० हरिपालश्रेयसे श्रीमुनि-सुव्रतस्वामिबिंब कारितं प्र० मलधारी श्रीश्रीतिलकसूरिभिः ॥

( १४५ )

सं० १३७८ वर्षे संघपति पोपा गेघा श्रेयोऽर्थं सा० धन-पाल सा० महणा देवसीहेन श्रीमहावीरबिंबं कारितं प्रतिष्ठितं मलधारी श्री [हेमचंद्र?] सूरीयगच्छे श्रीश्रीतिलकसूरिभिः ॥

( १४६ )

सं० १३९४ भण० महणा श्रे० वोहसीह धरणाभ्यां श्री-जिनबिंबं [कारितं] श्रीधर्मतिलकसूरिभिः [प्रतिष्ठितं ॥]

( १४७ )

सं० १२०२ आषाढ सुदि ६ सोमे श्री० ठ० अमारसेन सुत महं० ताज......स्वपितृश्रेयोऽर्थं प्रतिमा कारिता श्रीककुदा-चार्यैः प्रतिष्ठिता । मंगलं महाश्रीः ॥

( १४८ )

सं० १३७८ नाहरगोष्ठि सा० राहडपुत्र गेघु पु० महण-

सीह तथा चांड पु० रील्हणेन का० [प्र०] श्रीधर्मघोषसूरिपदे श्री-ज्ञानचंद्रसूरिभिः ॥

( १४९ )

सं० १३८२ वर्षे कार्तिक सुदि १५ प्राग्वाट् वाणिअ-रायी सुत ठ० मंतणराज श्रेयसे सुत जीवाकेन श्रीनेमिनाथबिंबं कारितं ॥

( १५० )

सं० १२०२ आषाढ सुदि ६ सोमे श्रीऋषभनाथबिंबं प्र-तिष्ठितं श्रीककुदाचार्यैः ठ० जसराकेन स्वपितुः ठ० बबलू श्रेयोर्थं प्रतिमा कारिता ॥

( १५१ )

( १ ) दशरथ मूर्ति ।
( २ ) हेमरथ मूर्ति ।
( ३ ) महं० श्रीमहिंदूय मूर्ति ।
( ४ ) महं० श्रीलालिग मूर्ति ।
( ५ ) महं० श्रीनेट मूर्ति ।
( ६ ) महं० श्रीवीर मूर्ति ।
( ७ ) महं० श्रीलहर मूर्तिः ।
( ८ ) महं० श्रीनीना मूर्तिः ।

( १५२ )

श्रीश्रीमालकुलोद्भव वीरमहामांत्रि पुत्र सन्मंत्रि श्रीनेटपुत्र

ळालिग तत्सुत महिंदुकेनेदं निजपुत्रकलत्रसमन्वितेन सन्मंत्रि-
दशरथेन श्रीनेमिनाथबिंबं मोक्षार्थं कारितं रम्यं ॥

( १५३ )

सं० १२०० जेष्ठ वदि १ शुक्रे महं० श्रीवीरसंताने महं०
चाहिल्ल सुत राणाक तत्सुत नरचिहिना कुटुंबसहितेन........
श्रेयोऽर्थं मुनिसुव्रतप्रतिमा कारितेति प्रतिष्ठिता श्रीनेमिचंद्रसूरिभिः ॥

( १५४ )

संवत् १११९ ।
थारापद्रीयसंताने सोमरुपालवल्लभः ।
शांत्यमात्यो महीख्यातः श्रावकोऽजनि सत्तमः ॥ १ ॥
भार्या तस्य शिवादेवी श्रेयसे प्रतिमामिमां ।
नीन्न-गीग्ययोः सुन्वोः कारयामास निर्मलं ॥ २ ॥

( १५५ )

संवत् १३७८ वेसलपुत्र माहण पुत्र लखमा भार्या ललि-
तादेवी पुत्र जयताकेन श्रे० का० श्रीधर्मघोषसूरिपट्टे श्रीज्ञानचंद्र-
सूरीणां उपदेशेन ॥

( १५६ )

वरवचनचारु कुसुमः संपादितमुनिमनोरथफलौघः ।
श्रीनन्नसूरिरनघः कल्पतरुर्जयति बुधसेव्यः ॥
स्तौति श्रीकक्कसूरिः ॥

( १५७ )

सं० १२०६ ॥
श्रीशीलभद्रसूरीणां शिष्यैः श्रीचंद्रसूरिभिः ।
विमलादिसुसंघेन युतैस्तीर्थमिदं स्तुतं ॥
अयं तीर्थसमुद्धारोऽद्भुतोऽकारि विमल[स्य] ।
श्रीमदानंदपुत्रेण श्रीपृथ्वीशमंत्रिणा ॥

( १५८ )

सं० १३९४ पूनसीह · · · · · · श्रीआदिनाथबिंबं प्र० श्रीमुनिचंद्रसूरिभिः ॥

( १५९ )

संवत् १३७८ वर्षे वै० वदि ९ श्रीमांडव्यपुरीय देगा पुत्र जगधर पुत्र समधर भार्या सिरियादेवी पुत्र सीहड आंबा माला भडसीहेन मातृ श्रेयसे का० श्रीधर्मघोषसूरिपदे श्रीज्ञानचंद्रसूरिभिः प्रतिष्ठितं ॥

( १६० )

श्रीथारापद्रीयसंताने महं० श्रीतिनायवलयोः श्रेयोर्थं माउकया शांतिनाथबिंबं कारितं········

( १६१ )

सं० १३७८ व० वै० वदि ९ श्रीमांडव्यपुरीय देगा पु० जगधर पु० समधर भार्या सिरियादेवी पुत्र सीहड आंबा माला

भडसीहैः पितृ श्रेयसे का० श्रीधर्मघोषसूरिपदे प्रतिष्ठितं श्रीज्ञानचंद्रसूरिभिः ॥

( १६२ )

सं० १३९४ सा० विजपाल पुत्री राणीनी आत्म श्रे० श्री..........नाथबिंबं [ का० प्र० ] श्रीज्ञानचंद्रसूरिभिः ॥

( १६३ )

संवत् १६९४ वर्षे महोपाध्याय श्री५ श्री........गणि तत् शिष्य पंडित श्रीहीरचंद्रगणिभिः पंडित श्रीकुशलभद्रग० गणि श्रीअमरचंद्र निज भ्रातृद्वयं संयुक्तः । मुनि........चंद्रे........रामचंद्रमुनींद्रेद्रचंद्र प्रमुखदश परिवारैः यात्रा निर्म..........

( १६४ )

सं० १३७८ वर्षे वैशाख वदि ९ श्रीमांडव्यपुरीय आसुपुत्र मोपदेवेन समवसरणे बिंबानि कारितानि श्रीधर्मघोषसूरिपट्टे श्रीज्ञानचंद्रसूरिभिः प्रतिष्ठितानि ॥ उपदेशेन ॥

( १६५ )

संवत् १२२६ वर्षे वैशाख सुदि ३ सोमे श्रीमदर्बुदमहातीर्थे महामात्य श्रीकवडिना स्वकीय पितृ ठ० श्रीआमपसा तथा स्वकीय मातृ ठ० सीतादेव्योः मूर्तिद्वयी देवश्री ऋषभनाथाग्रे कृता अक्षयतृतीया दिने आचार्य श्रीधर्मघोषसूरिभिः प्रतिष्ठिता ॥

( १६६ )

श्रीमद्धर्मघोषसूरिपट्टे श्रीआणंदसूरि श्रीअमरप्रभसूरिपट्टे

श्रीज्ञानचंद्रसूरिशिष्य श्रीमुनिशेखरसूरीणां मूर्तिः श्रे० छाहडभार्या बील्हणदेवी पुत्र भ्रातृ सूरा वालाभ्यां कारिता । शुभं भवतु । संवत् १३९६ वै० सु..................

( १६७ )

........वीजडभार्या बील्हणदेव्य[ा] धांधलदेव्य[ाच] समवसरण का० प्रतिष्ठितं श्रीधर्मघोषसूरिपट्टे श्रीज्ञानचंद्रसूरिभिः ॥

( १६८ )

संवत् १३७८ वै० व० ९ रिणस्तंभपुरवास्तव्य जांबडगोत्रे सा० हरिचंद्रपुत्र संघपति रतनश्रेयोऽर्थं पुत्र पुना हेमा गाजणैः पद्मप्रभ[प्रतिमा] कारिता श्रीसोमप्रभसूरि उपदेशेन ॥

( १६९ )

श्रीऋषभनाथस्य । संवत् १२४५ वर्षे वैशाख वदि ५ गुरौ प्राग्वाट कुल.................................श्रेयोर्थं धनपालेन श्रीऋषभनाथबिंबं कारितं कोसहुद (कासह्रद) गच्छे श्रीसिंहसूरिभिः प्रतिष्ठितं ॥

( १७० )

श्रीशांतिनाथस्य । संवत् १२४५ वर्षे वैशाख वदि ५ गुरौ दिने प्राग्वाट् महामात्येन श्रीधनपालेन..................... श्रेयोऽर्थं कोसहुद (कासह्रद) गच्छे श्रीसिंहसूरिभिः प्रतिष्ठितः ।

( १७१ )

सा० गोमल पुत्र रुदुपाल श्रेयसे संघपति महणसीह पुत्र सा० लाला संघपति धनासिंह पुत्र सा० विजड पुत्र....................

( १७२ )

श्रीसंभवनाथस्य । सं० १२४५ वर्षे वैशाख वदि ५ गुरौ महामात्य श्रीधनपालेन……श्रेयोऽर्थं श्रीसंभवनाथ प्रतिमा कारिता । कोसहुद ( कासहृद ) गच्छे श्रीसिंहसूरिभिः प्रतिष्ठिता ।

( १७३ )

सं० १३९५ सा० धनसिंह पु० सा० विजडसमरसिंहस्य भ्रातृ जिनपाल श्रेयोर्थं ॥

( १७४ )

॥ श्रीअभिनंदनस्य ॥ [सं० १२४५ वर्षे] वैशाख वदि ५ गुरौ पृथ्वीपालात्मज महामात्य श्रीधनपालेन मातृ श्रीपद्मावती-श्रेयोऽर्थं……कारित।[प्र०] श्रीकोसहुद ( कासहृद )गच्छे श्री-सिंहसूरिभिः ॥

( १७५ )

॥ सुमतिनाथस्य ॥ संवत् १२४५ वर्षे वैशाख वदि ५ गुरौ प्राग्वाट्……………पृथ्वीपाल आत्मश्रेयसे प्रतिमा कारिता कोसहुद (कासहृद) गच्छे श्रीसिंहसूरिभिः प्रतिष्ठिता ॥

( १७६ )

संवत् १२४५ वैशाख वदि ५ गुरौ……………… आत्मश्रेयसे……………श्रीपद्म……………सिंहसूरिभिः प्रतिष्ठिता ॥

( १७७ )

संवत् १२४९ वै० वदि ५ भृगौ प्राग्वाट..................
पृथ्वीपालात्मज ठ० जगदेव पत्नि ठ० श्रीमादलदे आत्मश्रेयोर्थं श्रीसुपार्श्वनाथ प्रतिमा का० श्रीसिंह [सूरिभिः प्रतिष्ठिता।]

( १७८ )

सं० १३९४ धनपाल पुत्रि बो० नाम आत्म श्रेयसे आदिनाथबिंबं का० प्र० श्रीज्ञानचंद्रसूरिभिः॥

( १७९ )

सं० १३७८ वैशाख व० ९ दो० महणसुत सोहड भार्या सुहडदेवी पुत्र महिंदेन पितृमातृश्रेयसे महावीरः कारितः। सा० महिंद भार्या रांभि श्रेयसे शांतिनाथः। सा० महिंद भार्या खीमणि श्रेयसे पार्श्वनाथजीर्णोद्धारः।

( १८० )

सं० १२४५ वर्षे वैशाख वदि ५ गुरौ प्राग्वाट.......वास्तव्य अमात्य धनपाल भार्या महं० श्रीपिणश्री.......श्रेयोऽर्थं चंद्रप्रभप्रतिमा कारिता प्रतिष्ठिता श्रीसिंहसूरिभिः॥

( १८१ )

श्रीमुनिसुव्रतजिनः। खरतर जाल्हणपुत्र तेजाकेन श्रीपुत्री वीरी श्रे० कारितं॥

( १८२ )

सं० १२८६ वर्षे फागुण सुदि २ रवौ श्रे० आल्हण सा०

( ३८८ )

सं० १५३२ वर्षे चैत्रसुदि ३ गुरु ऊ० गुगलाचा गोत्रे सा० खीमा पु० काजा भा० रतमादे पु० वरसा नरसा भादा भार्या पुत्रसहितेन स्वश्रेयसे श्रीसंडेरगच्छे श्रीजशोभद्रसूरि-संताने श्रीचंद्रप्रभसामिबिंबं कारितं प्रतिष्ठितं श्रीसालि[गसूरिभिः]

( ३८९ )

संवत् १५३४ वर्षे फा० शु० २ गुरौ ऊ० चूदालियागोत्रे चउ० सा० सिवा भा० सुहागदे पुत्र सा० देवाकेन भा० दाडि-मदे पुत्र आसा भार्या ऊमादे इत्यादि कुटुंबयुतेन स्वश्रेयसे श्री-शंभवनाथबिंबं का० प्रति० श्रीसूरिभिः वीरमपुर।

( ३९० )

संवत् १७०० वर्षे माघसितद्वादश्यां बुधे श्रीश्रीयोधपुर वास्तव्य उसवाल ज्ञातीय मुंहणोत्रगोत्रे जयराज भार्या मनोरथदे पुत्र सुभा पु० ताराचंद भोजराजादियुतेन श्रीशीतलपार्श्ववीरनेमि मूर्तिस्फुर्तिम[ति]विंशतिजिनबिंबविराजितदलदशकं चतुर्विंशति-जिनकमलकारितं प्रतिष्ठितं तपागच्छे भट्टारकश्रीविजयदेवसूरि-आचार्य श्रीविजयसिंहसूरिनिर्देशात् उ० ससम(?)चंद्रगणिभिः।

( ३९१ )

सं० १५२९ वर्षे माह सु० ५ रवौ ऊ० भांगर गो० सा० राणा भा० रत्नादे पु० चाहड भा० रइणा पु० खरहथ खादा खात खना पितृश्रे० श्रीनमिनाथबिंबं कारि० श्रीनागेंद्रगच्छे प्रतिष्ठितं श्रीसोमरत्नसूरिभिः।

(३९२)

॥ सं० १५ ...... सुदि २ सा० .... का० सा० मघा ........ स्वश्रेयसे श्रीकुंथुनाथबिंबं का० प्र० श्री-भिन्नमालगच्छे ..............

( ३९३ )

(1) ॥ संवत् १६८६ वर्षे वैशाखमासे शुक्लपक्षे पुष्ययोगे अष्टमीदिवसे महाराजाधिराजमहाराजश्रीगजसिंहविजयमान-

(2) राज्ये तत्सुतयुवराजकुमारश्रीअमरसिंहराजिते तत्प्रसाद-पात्रं चाहमानवंशावतंसश्रीजगन्नाथनाम्नि श्रीपाली-नगररा-

(3) ज्यं कुर्वति तन्नगरवास्तव्यश्रीश्रीश्रीमालज्ञातीय सा० मोटिल भा० सोभाग्यदे पुत्ररत्न सा० भाखरनाम्ना भा० भावलदे पु०

(4) सा० इसर अटोल प्रमुखपरिवारयुतेन स्वश्रेयसे श्रीसुपा-र्श्वबिंबं कारितं प्रतिष्ठापितं च स्वप्रतिष्ठायां प्रतिष्ठितं च पातशाहश्रीमदकबरशाहप्रदत्तजगद्गुरुबिरुदधारकतपग-च्छाधिराजभट्टारक-

(5) श्रीहीरविजयसूरिपट्टप्रभाकरभट्टारकश्रीविजयसेनसूरिप-ट्टालंकारभट्टारक श्रीविजयदेवसूरिभिः स्वपदप्रतिष्ठिताचा-र्यश्रीविजयसिंहप्रमुखपरिकरितैः ॥

( ३९४ )

(1) ॥ संवत् १६८६ वर्षे वैशाखमासे शुक्लपक्षे अतिपुण्ययोगे अष्टमीदिवसे श्रीमेडतानगरवास्तव्य सूत्रधार कुधरण-

(2) पुत्र सूत्र० ईसर दूदा हंसानामभिः [ ईसर ] पुत्र लखा चोखा सुरताण दूदा पुत्रनरायण हंसा पुत्र केशवादि परिवारपरिवृतैः

(3) स्वश्रेयसे श्रीमहावीरबिंबं कारितं प्रतिष्ठापितं च श्रीपालीवास्तव्य सा० डूंगर भाखर कारितप्रतिष्ठायां प्रतिष्ठितं

(4) च भट्टारक श्रीविजयसेनसूरिपट्टालंकार भट्टारक श्रीश्रीश्रीविजयदेवसूरिभिः स्वपदप्रतिष्ठिताचार्य श्रीविजयसिंह [ प्रमुखपरिकरपरिकरितैः ]

( ३९५ )

(1) ॥ संवत् १६८६ वर्षे वैशाखसुदि ८ शनौ महा-

(2) राजाधिराजमहाराजश्रीगजसिंहविजयमानराज्ये युवराजकुमारश्रीअमरसिंहराजिते

(3) तत्प्रसादपात्र चाहमानवंशावतंसश्रीजसवंतसुतश्रीजगन्नाथशासने श्रीपालीनगरवास्तव्यश्रीश्रीश्रीमाल-

(4) ज्ञातीय सा० सोटिल भा० सोभाग्यदे पुत्ररत्न सा० डूंगर भाखरनामभ्रातृद्वयेन सा० डूंगर भा० नाथदे पुत्र सा० रूपा रामसिंघ रतन सा०

(5) पौत्र सा० टीला सा० भाखर भा० भावलदे पुत्र ईसर

अटोल प्रमुख कुटुंबयुतेन स्वद्रव्यकारित नवलखाख्यप्रा-
सादोद्धारे श्रीपार्श्वनाथबिंबं

(6) सपरिकरं स्वश्रेयसे कारितं प्रतिष्ठापितं च स्वप्रतिष्ठायां
प्रतिष्ठितं च श्रीमदकबरसुरत्राणप्रदत्तजगद्गुरुबिरुदधारक
तपागच्छाधिराजभट्टारक-

(7) श्रीहीरविजयसूरिपट्टप्रभाकर भट्टारकश्रीविजयसेनसूरिप-
ट्टालंकारभट्टारकश्रीविजयदेवसूरिभिः स्वपदप्रतिष्ठिताचा-
र्यश्रीविजयसिंहप्रमुखपरिकरपरिकरितैः।

( ३९६ )

(1) ओं। श्रीपल्लिकीये प्रद्योतनाचार्यगच्छे व्र(वृ)द्धौ भादा-
मादाकौ तयोः श्रेयोर्थं लखमलासुत देशलेन रिख-

(2) भनाथप्रतिमा श्रीविरनाथमहाचैत्ये देवकुलिकायां का-
रिता। संवत् ११५१ आषाढ सुदि ८ गुरौ।

( ३९७ )

(1) ओं॥ सं० ११४४ माघसुदि ११ श्रंपतेरं प्रदेव्यास्तु
सूनुना जेज्जकेन स्वयं प्रपूर्णव्रजमानाद्यैर्मिलित्वा सर्व-
बांधवैः। १ खन्नके पूर्णभद्रस्य वीरना-

(2) थस्य मंदिरे कारिता वीरनाथस्य श्रेयसे प्रतिमानघा ॥२॥
सूरेः प्रद्योतनार्यस्य ऐंद्रदेवेन सूरिणा भूषिते सांप्रतं गच्छे
निःशेषनयसंजु(यु)ते ॥

( ३९८ )

॥ ॐ ह्रीँ श्रीँ नमः श्रीपातिसाह पुणसाह(?) विजयराज्ये ॥ संवत् १६८६ वर्षे वैशाखसिताष्टमी शनिवासरे महाराजाधिराज महाराजाश्रीगजसिंहजीविजयराज्ये श्रीपालिकानगरे सोनिगरा-श्रीजगंनाथजीराज्ये उपकेशज्ञातीय श्रीश्रीमालचंडालेचागोत्रे सा० मोटिलभार्या सोभागदे पुत्र सा० डूंगर भ्रातृ सा० भापर नामाभ्यां डूंगरभार्या नाथलदे पुत्ररूपसी रायसिंघ रतना भाप-रभार्या भावलदे पु० ईसर अटोल रूपा पु० टीला युतेन स्व-श्रेयसे श्रीशांतिनाथबिंबं कारापितं प्रतिष्ठितं श्रीचैत्रगच्छशार्दूल-शाखायां राजगच्छान्वये भ० श्रीमान् चंद्रसूरितत्पट्टे श्रीरत्न चंद्रसूरि वा० तिलकचंद्र मु० रूपचंद्रयुतेन प्रतिष्ठा कृता स्वश्रेयोर्थे श्रीपालिकानगरे श्रीनवलपाप्रासादे जीर्णोद्धारकारापितमूलनायक-श्रीपार्श्वनाथप्रमुखचतुर्विंशतिजिनानां बिंबानि प्रतिष्ठापितानि सु-वर्णमयकलशदंडो रूप्य सहस्र ५ द्रव्यव्ययकृतेनात्र बहुपुण्य उपार्जितं अन्यप्रतिष्ठागूर्जरदेशे कृता श्रीपार्श्वगुरुगोत्रदेवीश्री अंबिकाप्रसादात् सर्वकुटुंबवृद्धिर्भूयात् ॥

( ३९९ )

संवत् १६८६ वर्षे वैशाखसुदि ८ दिने राजाधिराजमहा-राजश्रीगजसिंहविजयमानराज्ये मेडतानगरवास्तव्य ऊकेशवंश कुहाडगोत्रे सा० हर्षा भार्या मीरादे पुत्र सा० जसवंतकेन स्व-श्रेयसे श्रीपार्श्वनाथबिंबं कारितं स्थापितं च ॥ महाराणा श्रीगज-सिंहविजयराज्ये श्रीगोडवाडदेशे श्रीविजयदेवसूरीश्वरोपदेशतः वीधरला वास्तव्य समस्तसंघेन शिशरिण्या उपरिनिर्मापितेन

बिंबेन प्री० (?) प्रतिष्ठितं च तपागच्छाधिराज भट्टारकश्रीमदकब-रसुरत्राणप्रदत्तजगद्गुरुबिरुदधारक भ० श्रीहीरविजयसूरीश्वर पट्ट-प्रभाकर भट्टारकश्रीविजयसेनसूरीश्वरपट्टालंकार भट्टारकश्रीवि-जयदेवसूरिभिः स्वपदप्रतिष्ठिताचार्यश्रीविजयसिंहप्रमुखपरिकर-परिकरितैः।

---

( ४०० )

संवत् १५४३ ज्येष्ठसुदि ११ शनौ प्राग्वाटज्ञातीय व्य० धर्मा भा० नाई सुत जीवा वेगाकेन भार्या गोमति सुत हर्षा हीरा व्य० कमला सु० काढा नागोरी निमित्तं पुत्री राजू नामा धरणा श्रीसंघसमस्तकुटुंबयुतेन व्य० कमलाश्रेयोर्थं श्रीपार्श्वना-थबिंबं कारितं प्र० श्रीज्ञानसागरसूरिपट्टे श्रीउदयसागरसूरिभिः श्रीविशलनगर वास्तव्य।

( ४०१ )

संवत् १५२३ वर्षे वैशाख सुदि ११ बुधे श्रीप्रागवाटवंशे सा० गांगदे भा० कपूराई पुत्र सा० वछराजसुश्रावकेण भा० पांची पुत्रवस्तुपालयुतेन स्वश्रेयोर्थे श्रीअंचलगच्छेशश्रीजयकेसरी-सूरीणामुपदेशेन श्रीविमलनाथबिंबं कारितं प्रतिष्ठितं संघेन।

---

( ४०२ )

(१) र्द० ॥ यः पुरात्र महास्थाने श्रीमाले स्वयमागतः।
स देवः श्री

(2) महावीरो देया[द्वः] सुखसंपदं ॥१॥
पुनर्भवभवत्रस्ताः संतो
(3) यं शरणं गताः ।
तस्य वीरजिनेंद्र[स्य] पूजार्थं शासनं नवं ॥ २ ॥
(4) थारापद्रमहागच्छे पुण्ये पुण्यैकशालिनां ।
श्रीपूर्णचंद्रसू[री]
(5) णां प्रसादाल्लिख्यते यथा ॥ ३ ॥
स्वस्ति संवत् १३३३ वर्षे ॥ आश्वि-
(6) नशुदि १४ सोमे ॥ अद्येह श्रीश्रीमाले महाराजकुलश्रीचा-
(7) चिगदेवकल्याणविजयि राज्ये तन्नियुक्त महं० गजसीह
(8) प्रभृति पंचकुलप्रतिपत्तौ श्रीश्रीमालदेशवहिकाधिकृतेन
(9) नैगमान्वयकायस्थमहत्तमसुभटेन तथा चेट्टककर्मसीहेन
(10) स्वश्रेयसे अश्विनमासीययात्रामहोत्सवे अश्विनशुदि १४च-
(11) तुर्दशीदिने श्रीमहावीरदेवाय प्रतिवर्षे पंचोपचारपू-
जानिमि-
(12) त्तं श्रीकरणीयपंचसेलहथडाभीनरपालं च भक्तिपूर्वं संबो-
(13) ध्य तलपदेहलसहडीपदमध्यात् फरकरहलसहडीएकसत्क
(14) द्र ५।२ सप्तविंशोपकोपते पंचद्रम्मा स(त)था सेलहथा-
भाव्ये आठ-
(15) डां मध्याद्द ८ अष्टौ द्रम्माः ॥ उभयं सप्तविंशोकोपेतत्र-
योदशद्र-
(16) म्मा आचंद्रार्कं देवदाये कारापिताः ॥ वर्तमानपंचकु-
लेन व-
(17) र्तमानसेलहथेन देवदायकृतमिदं स्वश्रेयसे पालनीयं ॥

( ४०३ )

(1) र्द० ॥ संवत् १२६५ वर्षे फाल्गुनवदि ७ गुरौ मौढप्र-
तापश्रीमद्धांदलदेव-

(2) कल्याणविजयराज्ये वधिलदे चैत्ये श्रीनाणकीयगच्छे
श्रीशांतिसूरिगच्छा-

(3) धिपे ॥ इतश्च ॥

आसीद्धर्कटवंशमुख्य उसलः श्राद्धः पुराशुद्धधी-
स्तद्गोत्रस्य

(4) विभूषणं समजनि श्रेष्ठी स पार्श्वाभिधः ।
पुत्रौ तस्य बभूवतुः क्षितितले वि

(5) ख्यातकीर्त्ती - -
- - - प्रथमो बभूव स गुणी रामाभिधश्चापरः ॥१॥
तथान्यः ।

(6) श्रीसर्व्वज्ञपदार्च्चने कृतमतिर्दाने दयालुर्मुहु-
राशादेव इति क्षितौ समभवत्

(7) पुत्रोस्य थांथाभिधः ।
तत्पुत्रो यतिसंगतिः प्रतिदिनं गोसाकनामा सुधीः

(8) शिष्टाचारविसारदो जिनगृहोद्धारोद्यतो योजनि ॥ २ ॥
कदाचिदन्यदा चित्ते वि-

(6) चिंत्य चपलं धनं ।
गोष्ठ्या च रामा-गोसाभ्यां कारितो रंगमंडपः ॥ ३ ॥
भद्रं भवतु ।



( ४०४ )

(1) ओं संवत् १२६५ वर्षे श्रीनाणकीयगच्छे धर्कटगोत्रे आसदेव तत्सुत जागू

(2) भार्या थिरमती तत्सुतो गाहडस्तस्य भार्या सातू तत्पुत्र आजमटादि

(3) समूर्तिकां लगिकां कारयामास।



( ४०५ )

(1) ओं॥ संवत् १२६५ वर्षे धर्कटवंशे श्राद्ध आसदेव भार्या सुखमनि तत्सुत धांधा भार्या जिणदेवि तत्पुत्राः पंच गोसा

(2) काल्हा राल्हण खावसीह पाल्हण प्रमुखा गोसापुत्र आम्रवीर यामजल काल्हा पुत्र लक्ष्मीधर महीधर राल्हणपुत्र

(3) आखेशूर खावसीह पुत्र देवजस पाल्हणपुत्र धणचंडा दधवदे स्वकलत्र समन्विताः स्वश्रेयोर्थं स्तंभलतामिमां

(4) कारयामास।

( ४०६ )

(1) ओं संवत् १२६५ वर्षे श्रे० साधिगभार्यामाल्ही तत्पुत्रा आववीर धदाक आवधराः

(2) आववीरपुत्र साल्हणगुणदेवादि समन्वित आत्मश्रेयसे लगिकां कारितवान् ।

(४०७)

(1) ओं ॥ संवत् १२६५ वर्षे ऊसलगोत्रे श्रेष्ठि भ्रास्व भार्या वूल्हेवी तत्पुत्र शशाकेन

(2) भार्या राजनजिराल्हू तस्याः पुत्राश्चत्वारो लक्ष्मीधर अभयकुमार भवकुमार शक्तीकुमारा लक्ष्मीधरपुत्र वीरदेव अभयदेव पुत्र सर्व्वदेव.............

---

(४०८)

सं० १५०६ वर्षे माघवदि १० गुरौ गोत्र वेलहरा ऊ० ज्ञातीय सा० रतन भार्या रतनादे पुत्र दूदा वीरम महपा देवा लूणा देवराजादि कुटुंबयुतेन श्रीवीरपरिकरः कारितः प्रतिष्ठितः श्रीशांतिसूरिभिः ।

(४०९)

सं० १५०५ वर्षे माहवदि ९ शनौ श्रीज्ञानकीयगच्छे श्रीमहावीरबिंबं प्र० श्रीशांतिसूरिभिः ।

---

(४१०)

सं० १४२९ माहवदि ७ चंद्रे श्रीविद्याधरगच्छे मोढज्ञा० ठ० रतन ठ० अर्जुन ठ० तिहुणा सुत भूवदेव श्रेयसे भ्रातृ टाहाकेन श्रीपार्श्वपंचतीर्थी का० प्र० श्रीउदयदेवसूरिभिः ।

( ४११ )

सं० १५३० वर्षे मा० ब० ६ प्राग्वाट ज्ञाति व्य० चाहड भा० राणी पु० व्य० वीटाकेन भा० बूटी पु० व्य० वेला प्रमुख कुटुंबयुतेन स्वश्रेयसे श्रीसंभवनाथबिंबं का० प्र० तपाश्रीलक्ष्मी-सगारसूरिभिः । चुंपराग्रामे ।

( ४१२ )

संव० १६३० वर्षे वैशाखवदि ८ दिने श्रीबहडाग्रामे उसवालज्ञातीय गोत्रतिलाहरा सा० सूदा भार्या सोहलादे पुत्र नासण वीदा नासण भार्या नकागदे वीदा भार्या कनकादे सुत वला श्रीआदिनाथबिंबं कारापितं श्रीहीरविजयसूरिभिः प्रतिष्ठितः ।

( ४१३ )

संवत् १५१५ वर्षे माघशु० १५ ऊकेश लाढागोत्रे सा० झांझू भ्रा० कपूरी सुत सा० वीरपालेन भार्या गांगीपुत्र पनवेल कर्मसी भ्रातृ दील्हादियुतेन श्रीशंभवनाथबिंबं कारितं प्रतिष्ठितं तपाश्रीरत्नशेखर सूरिभिः ।

( ४१४ )

॥ दं० ॥ संवत् १६२३ वर्षे वैशाखमासे शुक्रवारे १० दिने ईडरनगरवास्तव्य उसवाल ज्ञातीय मं० श्रीलहूआ सुत मं० जसा० मं० श्रीरामा महाश्राद्धेन भार्या रमादे मं० सिंधराज प्रमुख सकलकुटुंबयुतेन श्रीशांतिनाथबिंबं कारितं ॥ श्रीतपाग-च्छयुगप्रधान श्रीविजयदानसूरिपट्टे श्रीहीरविजयसूरिभिः प्रतिष्ठितं ।

(४१५)

सं० १५३४ वर्षे माघसु० ९ उप० ज्ञातीय गादहीयागोत्रे सा० कान्हा भार्या रतनादे पु० आका भा० यस्मादे पुत्र हराजा वढमेरादि सहितेन श्रीवासूपूज्यबिंबं कारितं श्रीउप० ककुदाचार्यसंताने प्र० देवगुप्तसूरिभिः।

(४१६)

सं० १५०५ वर्षे राणा श्रीलाखापुत्र राणा श्रीमोकलनंदन राणा श्रीकुंभकर्णकोशव्यापारिणा साह कोला पुत्ररत्न भंडारी श्रीवेलाकेन भार्या वीलहणदे विजयमानभार्या रतनादे पुत्र भं० मूंधराज भं० धनराज भं० कुंरपालादिपुत्रयुतेन श्रीअष्टापदाह्वः श्रीश्रीश्रीशांतिनाथमूलनायक प्रासाद[:] कारितः श्रीजिनसागरसूरिप्रतिष्ठितः श्रीखरतरगच्छे चिरं राजतु। श्रीजिनराजसूरि श्रीजिनवर्द्धनसूरि श्रीजिनचंद्रसूरि श्रीजिनसागरसूरिपट्टांभोजार्कनंदतु श्रीजिनसुंदरसूरि प्रसादतः। शुभं भवतु। पं० उदयशीलगणि नंनमति॥

(४१७)

(1) ॥ संवत् १६१४ वर्षे श्रीवीरमपुरे ॥ श्रीशांतिनाथचैत्ये मार्गशीर्षमासे प्रथमद्वितीयादिने ॥ श्रीखरतरगच्छे श्रीजिनचंद्रसूरिविजयराज्ये ॥ सश्रीकवीरमपुरे विधिचैत्यराजे प्रोत्तुंगचंगशिषरे नतदेवराजे। सौवर्णवर्णवपुषं सुविशुद्धपक्षं प्रेयोतितीर्थपतिम—तशुद्धपक्षं ॥ १ ॥

(2) अर्हंतमर्हतगतां तलतांतभक्त्या श्रीशांतिनामकमनंतनितांतभक्त्या । श्रीविश्वसेनतनुजं भजतात्मशक्त्या सारंगलक्ष्मणजिनं स्मरतोक्तयुक्त्या ॥ २ ॥ यस्यातीतभवेऽप्यकारि महता शक्रस्तनामार्षिणा श्येनाकारभृता कपोततनुभृद्रिक्षापुरीक्षो–

(3) र्हतः । भोक्ता योगिकयोगिचक्रिपदवीसाम्राज्यराज्यश्रियः । स श्रीशांतिजिनोस्तु धार्मिकनृणां दातात्मसंपत्श्रियः ॥ ३ ॥ श्रीशांतिदेवोऽवतु देवदेवो धर्म्मोपदिष्टामुददायिसेवः । नंतास्ति यस्यादिमवर्णनामा राजोपमास्यस्य तु भक्तिनाम ॥ ४ ॥ श्रीधनराजोपाध्यायानामुपदेशेन

(4) पंडित मुनिमेरुलिखितं ॥ सूत्रधार जोधा दंता गदा नरसिंगकेन कारितानिकायानि चतुःकिकामल्लपट्टके ॥ शुभं भूयात् ॥ राउलश्रीमेघराजविजयराज्ये श्रीशांतिनाथनालिमंडपो निष्पन्नः ॥

## (४१८)

(1) [संव]त् १५६८ वर्षे वैशाखशुदि ७ दिने गुरुपुष्ययोगे राउल श्रीकुंभकर्ण विजय[राज्ये]

(2) श्रीविमलनाथप्रासादे श्रीतपागच्छनायकभट्टारकश्रीहेमविमलसूरिशिष्य पं० चारित्रसाधुगणि–

(3) नामुपदेशेन श्रीविरमपुरवासिसकलश्रीसंघेन कारापितो रंगमंडपः । सूत्रधारहेलाकेन कृतः । चिरं नंदतु । श्रीरस्तु ॥

( ४१९ )

( 1) ॥ ई० ॥ आषाढादि संवत् १६८१ वर्षे चैत्रवदि ३ दिने सोमवारे हस्तनक्षत्रे वीरमपुरे राउलश्रीजगमालजीविजयराज्ये श्रीपल्लीवालगच्छे भट्टारकश्रीयशोदेवसूरिजीविज[यमा]ने श्रीपार्श्वनाथजीचैत्ये श्रीपल्लीगच्छसंघेन गवाक्षत्रय-

( 2 ) सहिता सुशोभना निर्गमचतुष्किका कारापिता उपाध्यायश्रीहरशेखराणां पट्टप्रभाकरोपाध्यायश्रीकनकशेखरतत्पट्टालंकारोपाध्यायश्रीदेवशेखरैः स्वगनैः उपाध्यायकनकशेखरहस्तदीक्षितेन उपाध्याय श्रीसुमतिशेखरेण स्वहस्तेन

( 3 ) लिखितं ॥ श्रीः श्रेयोस्तु श्रीश्रावकसंघस्य शुभं भवतु। सूत्रधार हेमापुत्र . . . . . ।

( ४२० )

( 1 ) संवत् १६६७ वर्षे शाके १५३२ प्रवर्तमान द्वितीय आषाढसुदि ६ दिने शुक्र-

( 2 ) वारे उत्तराफाल्गुनीनक्षत्रे राउलश्रीतेजसीजीविजयराज्ये श्रीविमलना-

( 3 ) थप्रासादे श्रीतपागच्छे भट्टारिक श्री ५ श्रीविजयसेनसूरिविजयराज्ये आचार्य श्री[विजयदेव] - - - -

( ४२१ )

( 1 ) ॥ ई० ॥ संवत् १६३७ वर्षे शाके १५०२ प्रवर्त[माने] वैशाखशुदि ३ दिनः। गुरुवारे रोहिणीनक्षत्रे [राउल] श्री मेघराजजी विजयराज्ये श्रीविमलनाथप्रासादे

( 2 ) श्रीतपागच्छे गच्छाधिपतिप्रभुश्रीपरमभट्टारकश्रीहीर-विजयसूरिविजयराज्ये आचार्यश्रीविजयसेनसूरिः। उपाध्यायश्रीधर्मसागरग[णीनामुपदेशेन(?) ]

( 3 ) श्रीसंघेन कारापितं। श्रीरस्तु। कल्याणमस्तु। सूत्रधार घडसी पुत्र सूत्रधार राउत।

---

( ४२२ )

( 1 ) संवत् १२४६ वर्षे कात्तिकवदि २ श्रीमान

( 2 ) देवाचार्यगच्छे श्रीखेट्टीय श्रीमहावीरमूलचैत्ये

( 3 ) श्रे० सहदेवसुतेन सोनिगेन आत्मश्रेयोर्थं सं

( 4 ) (भ: [वजुगं प्र]दत्तं ॥ २

( ४२३ )

( 1 ) संवत् १२१० श्रवणवदि

( 2 ) ७ श्रीविजयसिंहेन वा

( 3 ) लिग सासणं प्रदत्तं

( 4 ) खेडिजुं राणौ होई सु-

(5) जुको वालिगु लेई

(6) कुहाड़ु लेई तहि के

(7) रिय गदह चडइ . . . .

---

(४२४)

(1) सं० १२४९ वर्षे माघसुदि १० गुरौऽद्येह श्रीनङ्कले महाराजाधिराजश्रीकेल्हणदेवराज्ये तत्पुत्रराजश्रीजयतसीहदेवो

(2) विजयी ज—तत्पादपद्मोपजीविनमहामात्यश्रीवाल्हणप्रभृतिपंचकुलेन महं॰ मृमदेवसुतराजदेवेन देवश्रीम-

(3) हावीरमदत्तद्र १ पाट्टह्यलीमध्यात् । वहुभिर्वसुधा भुक्ता राजभिः सगरादिभि यस्य यस्य जदा दत्तं तस्य तस्य तदा

(4) फलं ।

(४२५)

(1) ॥ र्द० ॥ संवत् १३५९ वर्षे वैशाख शुदि १० शनिदिने नडुलदेशे वाघसीणग्रामे महाराजश्री सामंतसिहदेवकल्याणविजयराज्ये एवं काले वर्तमाने सोलं० षाभट पु० रजर सोलं०

(2) गागदेव पु॰ आंगद मंडलिक सोलं० सीमाल पु० कुंता धारा सोलं॰ माला पु॰ मोहण त्रिभुवण पदा

सो० हरपाल सो० धूमण पटीयायत वणिग् सीहा सर्वसोलंकीसमुदायेन वाघसीणग्रामीय अर-

(3) हट अरहट प्रति गोधूम से ४ ढींबडा प्रति गोधूम सेई २ तथा धूलियाग्रामे सो० नयणसीह पु० जय-तमाल सो० मंडलिक अरहट प्रति गोधूम सेई ४ ढींवडा प्रति गोधूम सेई २ सेतिका २

(4) श्रीशांतिनाथदेवस्य यात्रामहोत्सवनिमित्तं दत्ता ॥ एतत् आदानं सोलंकीसमुदायः दातव्यं पालनीयं च । आ-चंद्रार्कं ॥ यस्य यस्य यदा भूमी तस्य तस्य तद फलं ॥ मंगलं भवतु ॥

( ४२६ )

(1) सं० १३(२)०० वर्षे जेठ सुदि १० सोमे अद्येह चं-
(2) द्रावत्यां महाराजाधिराज श्रीआल्हण-
(3) सिंहदेव कल्याणविजयराज्ये तन्नि-
(4) युक्तमुद्रायां महं श्रीपेताप्रभृति पं-
(5) चकुलं शासनमभिलिख्यते यथा
(6) महं श्रीपेताकेन - - नानकलागर
(7) ग्रामे - - - - - - - श्रीपार्श्वनाथ-
(8) देवस्य लो . . . . . . . . . . . . . . . . . . . . . .
(9) - - - रहिता . . . . . . . . . . . . . . . . . . . . .
(10) एवं ॥ आचंद्रार्कं - - - - यस्य

( 11 ) यस्य यदा भूमी तस्य तस्य तदा फलं ॥

( 12 ) साखि राउल० व्रा अलिणव व्रा दउव

( 13 ) व्रा जव – सोहण – – – – वणदेसणा–

( 14 ) ·········································· कल्हा ··· ॥

( ४२७ )

( 1 ) श्रीभिल्लमालनिर्यातः प्राग्वाटः वणिजां वरः । श्रीपतिरिव लक्ष्मीयुग्गोलंच्छ्री राजपूजितः ॥ आकरो गुण रत्नानां बन्धुपद्मदिवाकरः । जज्जुकस्तस्य पुत्रः स्यात् नम्मरामौ ततोऽपरौ ॥ जज्जुसुतगुणाढ्येन वामनेन भवाद्भयम् ॥

( 2 ) दृष्ट्वा चक्रे गृहं जैनं मुक्त्यै विश्वमनोहरम् ॥ सम्वत् १०९१ ।

( ४२८ )

( 1 ) ओं ॥ संवत् १२५१ आषाढवदि ५ गुरौ श्रीनाणकीयगच्छे ऊथण सदधिष्ठाने। श्रीपार्श्वनाथचैत्ये ॥ धंनेश्वरस्य पुत्रेण देवधरेण

( 2 ) धीमता ।
संयुक्तेन यशोभट आल्हा पाल्हा सहोदरैः ॥
यशोभटस्य पुत्रेण सार्द्धं यसधरेण भां (च) ।
पुत्रपौत्रादियुक्तेन धर्महेतुमहामनाः ॥

(3) भगिनी धरमत्याख्या भर्तुश्चैव यशोभटः ।
कारितं श्रेयसे ताभ्यां रम्येदस्तुंगमंडपम् ॥

---

(४२९)

(1) ओं ॥ सं० १२४१ वैशाखसुदि ७ अद्येह श्रीकेल्हण-देवरा-
(2) ज्ये तस्यात्मजश्रीमोढलदेवस्वभुज्यमानघंघाणक-
(3) पद्रचैत्ये श्रीमहावीरदेववर्षगतिनिमित्तं पना-
(4) यिय भं• यदुवीर गुणधरेन मांडव्यपुरीय मंढ-
(5) पिकायां दानमध्यात् द्रं० ॥ मासं प्रति दातव्या
(6) चंद्रार्कं यावत् ॥ बहुभिर्वसुधा भुक्ता राजभिः
(7) सगरादिभिः । यस्य यस्य यदा भूमि तस्य तस्य
(8) तदा फलं ॥ स्वदत्तं परदत्तं वा देवानां जो हरेत्
(9) धनं । षष्टिवर्षसहस्राणि नरके स कृमिर्भवेत् ॥

---

(४३०)

ओं ॥ श्रीवर्द्धमानविभुरद्भुतशारदेन्दु-
दोंषानुषंम(ग)विमुखः सुभगः शुभाभिः ।
आढ्यं भविष्णुरमलाभिरसौ कलाभिः
संतापमंतयतु कौमुदमातनोतु ॥ १ ॥
श्रीमति धारावर्षे विक्रमतर्षे प्रमारकुलहर्षे ।
अष्टादशशतदेशोत्तंसे चंद्रावतीहंसे ॥ २ ॥

श्रीमत्केल्हण(*)णमंडलपतितनयायां नयैकशालिन्यां।
तत्पट्टप्रणयिन्यां शृंगारपदोपपददेव्यां ॥ ३ ॥

एतद्ग्रामप्राभववैभवभृति तत्प्रदत्तसाचिव्ये।
सकलकलाकुलकुशले गृहमेधिनि नागडे सचिवे ॥ ४ ॥

दिः (द्विः) स्मरशरदिनकरमितवर्षे शुचिशस्यसंपदुत्कर्षे।
दुंदुभिनामनि धामनि(*)विटपपल्लवितधर्मधियां ॥ ५ ॥

एतत्षट्कचतुष्किकाविरचितश्रीमंडपोद्धारतः
पुण्यं पण्यमगण्यमाकलयति श्रीवीरगोष्ठीजनः।
मन्ये किंतु चतुष्किकाद्वयमिदं दत्ताभिमुख्यस्थिति-
स्थेयस्तत्कलिमोहभूपयुगली जित्वातपत्रद्वयीं ॥ ६ ॥

इंदुः कुंदसितैः करैः पुलकयत्याकाशः(*)वल्लीं मृदु-
यावद्भानुरसौ तनोति परितोष्याशाः प्रकाशोज्ज्वलाः
तावद्धार्मिकधर्मकर्मरभसप्रारब्धकल्याणिक-
स्तोत्राद्युच्छवगीतवाद्यविधिभिः जीयात्रिकं सर्वतः ॥७॥

राज्ञा शृंगारदेव्यात्र वाटिका भूमिरद्भुता।
दत्ता श्रीवीरपूजार्थं शास्वतः श्रेयसः श्रिये ॥ ८ ॥

साक्षिता दा(*)णिकः साक्षात्प्रेक्षा दाक्ष्यबृहस्पतिः।
अत्राभून्नीरडो वर्म्मो सौत्रधारेसु कर्म्मसु ॥ ९ ॥ छ ॥

पूज्यपरमाराध्यतमश्रीतिलकप्रभसूरीणां कृतिरियं ॥ छ ॥

संवत १२५५ आसोयसुदि ७ बुधवारे सकलगोष्ठि-
कलोकः त्रिकोद्धारं स्वश्रेयसे कारितवानिति ॥ छ ॥

( ४३१ )

॥ र्द० ॥ संवत् १६११ वर्षे बृहत्खरतरगच्छे श्रीजिनमाणिक्यसूरिविजयराज्ये ॥ श्रीमालन्यातीय पापडगोत्रे । ठाकुर रावण तत्पुत्र उणगडमल तद्भार्या नमणी । तत्पुत्र जीवराजेन श्रीपार्श्वनाथपरिगृह कारापितं । गउ धर्मसुंदरगहिमां (?)

( ४३२ )

संवत् १५६९ वर्षे माघशुदि १३ दिने स्तंभतीर्थवासी ऊकेशज्ञातीय सा० पातल भा० पातलदे पुत्र सा० जइता भार्या फते पुत्र सा० सीहा सहिजा भा० पुरी पुत्री सापा [पु०] दलिक भा० कमलापुत्र सा० जीराकेन सा० पुनी पितृव्य सा० सोपा हापा विजा कुटंबयुनेन पितृवचनात् स्वसंतानश्रेयोर्थं श्रीसुमतिनाथबिंबं कारितं प्रति० तपागच्छे श्रीसोमसुंदरसूरिसंताने श्रीसुमतिसाधुसूरिपट्टे श्रीहेमविमलसूरिभिः महोपाध्यायश्रीअनंतहंसगणि प्र० परिवारपरिवृतैः ।

( ४३३ )

॥ सं० १५०७ वर्षे फा० व० ३ बुधे ओशवंशे वहरा हीरा भा० हीरादे पु० व० षेता भा० षेतलदे पु० व० हिमति पितृश्रेयसे श्रीशांतिनाथबिंबं कारितं श्रीखरतरगच्छे श्रीजिनभद्रसूरि श्रीजिनसागरसूरिभिः प्रतिष्ठिता ।

( ४३४ )

(1) संवत् १६७७ ज्येष्ठ वदि ५ गुरुवारे पातसाहिश्रीजहां-

गीर विजयिराज्ये साहियादा साहिजहांराज्ये। ओसवालज्ञातीय गणधरचोपडागोत्रीय सं० नगा भार्या नयणादे

(2) पुत्र संग्राम भा० तोली पु० माला भा० माल्हणदे पु० देका भा० देवलदे पु० कचरा भा० कउडिमदे चतुरंगदे पु० अमरसी भा० अमरादे पुत्ररत्न संप्राप्तश्री-अर्बुदाचलविमलाचल-

(3) संघपतितिलककारि युगप्रधानश्रीजिनसिंहसूरिपट्टप्रभाकर भट्टारक श्रीजिनराजसूरिपदनंदिमहोत्सवविविधधर्म्मकर्तव्यविधायक सं० आसकरणेन पितृव्य चांपसी भ्रातृ अमीपाल

(4) कपूरचंद स्वभार्या अजाइबदे पु० ऋषीदास सूरदास भ्रातृव्य गरीवदासादिसारपरिवारेण श्रेयोर्थं स्वयंकारित मम्माणीमयविहारशृंगारकश्रीशांतिनाथबिंबं कारितं प्रतिष्ठितं श्रीमहावीरदेवा-

(5) वच्छिन्नपरंपरायातश्रीबृहत्खरतरगच्छाधिपश्रीजिनभद्रसूरिसंतानीयप्रतिबोधितसाहि श्रीमदकब्बरप्रदत्तयुगप्रधानपदवीधर श्रीजिनचंद्रसूरिविहितकठिनकाश्मीरविहार वारसिंदूरगज्जणादि-

(6) [वि]विध देशामारि प्रवर्तक जहांगीरसाहिप्रदत्त युगप्रधानपदधारक श्रीजिनसिंहसूरिपट्टोत्तंसलब्ध श्रीअंबिकावरप्रतिष्ठितश्रीशत्रुंजयाष्टमोद्धारप्रदर्शितभाणवढमध्यप्रतिष्ठित श्रीपार्श्वप्रतिमापे( पी )-

(10) युषवर्षणप्रभावबोहित्थवंशमंडनधर्म्मसीधारलदेनंदनभट्टा-
रक चक्रचक्रवर्तीश्रीजिनसूरिदिनकरैः ॥ आचार्य श्री-
जिनसागरसूरिप्रभृतियतिराजैः ॥ सूत्रधारसुजा ।

( ४३५ )

( 1 ) संवत् १६६९ वर्षे माहसुदि ५ शुक्रवासरे महाराजाधि-
राज महाराज श्रीसूर्यसिंहविजयराज्ये उपकेशि-

( 2 ) ज्ञातीय लोढागोत्रे सं० टाहा तत्पुत्र सं० रायमल्ल भा०
रंगादे तत्पुत्र सं० लापाकेन भा० लाडिमदे पुत्र वत्स-
पालसहितेन श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीमत्
श्रीबृहत्खरतरगच्छे श्रीआद्यपक्षीयश्री-

( 3 ) जिनसिंहसूरितत्पट्टोदयाद्रिमार्तंडश्रीजिनचंद्रसूरिभिः ॥
शुभं भवतु ॥

( ४३६ )

( 1 ) सं० १६८७ व० ज्येष्टसुदि १३ गुरौ ।

( 2 ) सं० जसवंत भा० जसवंतदे पु० अचलदासकेन
श्रीविजयचिंतामणिपार्श्वनाथबिंबं-

( 3 ) का० प्र० तपाश्रीविजयदेवसूरिभिः ।

( ४३७ )

( 1 ) संवत् १६८४ वर्षे माघसुदि १० सोमे संघ० हरषा
भा० मीरादे तत्पुत्र संघवी ज-

(2) संवत भा० जसवंतदे तत्पुत्र सं० अचलदास अषि-
राज सं० शामकरण कारितं प्रतिष्ठितं तपागच्छे भ-
(3) ट्टारिक श्री६ विजयदेवसूरिभिः ।

(४३८)

(1) संवत् १६७७ वर्षे अक्षयतृतीयादिने शनि
(2) रोहिणीयोगे मेडतानगरवास्तव्य सा० लाषा भा०
सरूपदे नाम्न्या श्रीमुनिसुव्रतबिंबं कारितं
(3) प्रतिष्ठितं भट्टारक श्रीविजयसेनसूरीश्वरपट्टप्रभाकर जिहां-
गीर महातपाबिरुदविख्यात
(4) युगप्रधानसमानसकलसुविहितसूरिशभाशृंगारभट्टारक
श्रीविजयदेवसूरिराजेंद्रैः ॥

(४३९)

(1) सं० १६७७ ज्येष्ठवदि ५ गुरौ ओसवालज्ञातीय गण-
धरचोपडागोत्रीय सं० नग्गाभार्या नयणादे पुत्र
संग्राम भार्या तोली पु० माला भार्या माल्हणदे पु०
देका भा० देवलदे पु० कचरा भार्या
(2) कउडमदे चतुरंगदे पुत्र अमरसी भार्या अमरादे पुत्र-
रत्नेन श्रीअर्बुदाचल श्रीविमलाचलादिप्रधानतीर्थयात्रा-
दिसद्धर्म्मकर्म्मकरणसम्प्राप्तसंघतिलकेन श्रीआसकरणेन
पितृव्य चांपसी भ्रातृ
(3) अमीपाल कपूरचंद स्वपुत्र ऋषभदास सूरदास भ्रा-

तृव्य गरीबदास प्रमुख सश्रीकपरिवारेण सं० रूपजी-
कारितशत्रुंजयाष्टमोद्धारमध्यस्वयंकारितप्रवरविहारशृं-
गारहारश्रीआदिश्वरबिंबं कारितं

(4) पितामहवचनेन प्रपितामहपुत्र मेघा कोझा रतना प्रमुख
पूर्वजनाम्ना प्रतिष्ठितं श्रीबृहत्खरतरगच्छाधीशसाधू-
पद्रववारक प्रतिबोधितसाहिश्रीमदकब्बरमदत्तयुगप्रधा-
नपदधारक श्रीजिनचंद्रसूरि

(5) जहांगीरसाहिप्रदत्तयुगप्रधानपदधारक श्रीजिनसिद्धसू-
रिपट्टपूर्वाचलसहस्रकरावतारप्रतिष्ठितश्रीशत्रुंजयाष्टमो-
द्धारश्रीभाणवटनगरश्रीशांतिनाथादिबिंबप्रतिष्ठासमय-
निर्ज्झरत्सुधारसश्रीपार्श्वप्रति-

(6) हारसकलभट्टारकचक्रचक्रवर्तिश्रीजिनराजसूरिशिरःशृं-
गारसारमुकुटोपमानप्रधानैः ॥

( ४४० )

(1) संवत् १६७७ वर्षे वैशाखमासे अक्षयतृतीया दिवसे
श्रीमेडतावास्तव्य उ० ज्ञा० समदडियागोत्रीय

(2) सा० माना भा० महिमादे पुत्र सा० रामाकेन भ्रातृ-
रायसंग भा० केसरदे पुत्र जइतसी लषमीदास प्रमुख-
कुटंब-

(3) युतेन श्रीमुनिसुव्रतबिंबं का० प्र० तपागच्छे भट्टारक-
श्री पं० श्रीविजयसेनसूरिपट्टालंकार भ० श्रीविजयदे-
वसूरिसिंहैः ।

(४४१)

सं० १६५३ वर्षे वै० शु० ४ बुधे श्रीशांतिनाथबिंबं गादहीआगोत्रे सं० सुरताण भा० हर्षमदे पु० सं० हांसा भा० लाडमदे पु० पदमसी कारितं प्रतिष्ठितं श्रीतपागच्छे श्रीहीरविजयसूरिपट्टे श्रीविजयसेनसूरिभिः ॥ पं० विनयसुंदरगणिः प्रणमति ॥ श्रीरस्तु ॥

( ४४२ )

॥ दं० ॥ संवत् १६८६ वर्षे वैशा० शु० ८ महाराजश्रीगजसिंहविजयराज्ये श्रीमेडतानगरवास्तव्य ओसवालज्ञातीय सूराणागोत्र बाई पूरीनाम्न्या पु० लक्ष्मणादिसपरिवारया श्रीसुमतिनाथबिंबं कारितं प्रतिष्ठितं तपागच्छाधिराजभट्टारकश्रीविजयदेवसूरिभिः स्वपदप्रतिष्ठिताचार्यश्रीश्रीविजयसिंहसूरिप्रमुखपरिकरपरि करितैः ॥

(४४३)

(1) प्र० भट्टारकप्रभु श्रीजिनराजसूरिभिः ।

(2) संवत् १६७७ ज्येष्टवदि ५ गुरौ श्रीओसवाल ज्ञातीय गणधरचोपडागोत्रीय सं० कचरा भार्या कउडिमदे चतुरंगदे

(3) पुत्र सं० अमरसी भा० अमरादे पुत्र रत्र( त्न ) सं० अमीपालेन पितृव्य चांपसी वृद्धभ्रातृ सं० आसकरण लघुभ्रातृ कपूरचंद स्वभार्या

(4) अपूरवदे पु० गरीबदासादिपरिवारेण श्रीअजितनाथ-
बिंबं का० प्र० सू० खरतरगच्छाधीश्वरश्रीजिनराजसू-
रिसूरिचक्रवर्ति-

(5) पट्टप्रभाकरैः । श्रीअकब्बरसाहिप्रदत्तयुगप्रधानपदप्रवरैः
प्रतिवर्षाषाढी-

(6) याष्टाहिकादिषाण्मासिकामारिप्रवर्तकैः । श्रीपंत(?)तीर्थो-
दधिमीनादिजीवरक्षकैः । श्रीशत्रुं-

(7) जयादितीर्थकरमोचकैः । सर्व्वत्र गोरक्षाकारकैः पंचन-
दीपीरसाधकैः । युगप्रधानश्रीजिनचंद्रसूरिभिः ।

(8) आचार्यश्रीजिनसिंहसूरि श्रीसमयराजोपाध्याय वा०
हंसप्रमोद वा० समयसुंदर वा० पुण्यप्रधानादिसाधु
युतैः ॥

---

(४४४)

र्द ॥ संवत् १२२१ मार्ग्गसिर सुदि ६ श्रीफलवर्द्धिकायां
देवाधिदेवश्रीपार्श्वनाथचैत्ये श्रीप्राग्वाटवंशीय रोपिमुणि भं०
दसाढाभ्यां आत्मश्रेयोर्थं श्रीचित्रकूटीयसिलफटसहितं चंदको
प्रदत्तः शुभं भूयात्

(४४५)

र्द० ॥ चैत्ये नरवरे येन श्रीसल्लक्ष्मटकारिते ।
मंडपो मंडनं लक्ष्म्याः कारितः संघभास्वता ॥ १ ॥
अजयमेरुश्रीवीरचैत्ये येन विधापिताः ।
श्रीदेववालकाः ख्याताश्चतुर्विंशतिशिषराणि ॥ २ ॥

श्रेष्ठी श्रीमुनिचंद्राख्यः श्रीफलवर्द्धिकापुरे।
उत्तानपट्टं श्रीपार्श्वचैत्येऽचीकरदद्भुतं ॥ ३ ॥



## कच्छान्तर्गतखाखरग्रामस्थलेखः।



( ४४६ )

व्याकरणकाव्यसाहित्यनाटकसङ्गीतज्योतिषछन्दोऽलङ्कारकर्कशतर्कशैवजैनचिन्तामणिप्रचण्डखण्डनमीमांसास्मृतिपुराणवेदश्रुतिपद्धतिषट्त्रिंशत्सहस्राधिक ६ लक्षमितश्रीजैनागमप्रमुखस्वपरसिद्धान्तगणितजाग्रद्यावनीयादिषड्दर्शनीग्रन्थविशदेति ज्ञानचातुरीदलितदुर्वादिजनोन्मादैः ब्राह्मीयावनीयादिलिपीपिच्छालिपीविचित्रचित्रकलाघटोज्ज्वालनात्राधिविधीयमानविशिष्टशिष्टचेतश्चमत्कारकारिशृंङ्गारादिरससरसचित्राद्यलङ्कारालङ्कृतसुरेन्द्रभाषापरिणतभव्यनव्यकाव्यपट्त्रिंशद्रागिणीगणोपनीतपरमभावरागमाधुर्यश्रोतृजनामृतपीतगीतरासप्रबन्धनानाछन्दःप्राच्यमहापुरुषचरित्रप्रमाणसूत्रवृत्त्यादिकरणयथोक्तसमस्यापूरणविविधग्रन्थग्रथनेन नैकश्लोकशतसङ्ख्यकरणादिलब्धगीःप्रसादैः श्रोतृश्रवणामृतपारणानुकारिसर्वरागपरिणतिमनोहारिमुखनादैः स्पष्टाष्टावधानशतावधानकोष्टकपूरणादिपाण्डित्यानुरञ्जितमहाराष्ट्रकोङ्कणेशश्रीबुर्हानशाहि-महाराजश्रीरामराज-श्रीखानखाना श्रीनवरङ्गखानप्रभृत्यनेकभूपदत्तजीवामरिप्रभूतबन्दिमोक्षादिसुकृतसमर्ज्जितयशःप्रवादैः पं० श्रीविवेकहर्षगणिप्रसादैरस्मद्गुरुपादैः ससङ्घाटकैस्तेषामेव

श्रीपरमगुरूणामादेशप्रसादं महाराजश्रीभारमल्लजिदाग्रहानुगामिनमासाद्य श्रीभक्तामरादिस्तुतिभक्तिप्रसन्नीभूतश्रीऋषभदेवोपासकसुराविशेषाज्ञया प्रथमविहारं श्रीकच्छदेशेऽत्रचक्रे तत्र सं० १६५६ वर्षे श्रीभुजनगरे आद्यं चतुर्मासकं द्वितीयं च रायपुरबन्दिरे तदा च श्रीकच्छमच्छुकाण्ठापाश्चिमपश्चालवागडजेसलामण्डलाद्यनेकदेशाधीशैर्महाराज श्रीखेङ्गारजी पट्टालङ्करणैर्व्याकरणकाव्यादिपारिज्ञानतथाविधैश्वर्यस्थैर्यधैर्यादिगुणापहस्तितसरस्वतीमहानवस्थानाविरोधत्याजकैर्यादववंशभास्करमहाराजश्रीभारमल्लजीराजाधिराजैः[विज्ञप्ताः ] श्रीगुरवस्ततस्तदिच्छापूर्वकं संजग्मिवांसः । काव्यव्याकरणादिगोष्ठ्या स्पष्टाष्टावधानादिप्रचण्डपाण्डित्यगुणदर्शनेन च रञ्जितै राजेन्द्रैः श्रीगुरूणां स्वदेशे जीवामारि प्रसादश्चक्रे ।

तद्व्यक्तिर्यथा सर्वदा हि गवामारिः पर्युषणाऋपिपञ्चमीयुतनवदिनेषु तथा श्राद्धपक्षे सर्वैकादशीरविवारदर्शेषु च तथा महाराजजन्मदिने राज्यदिने सर्वजीवामारिरिति सार्वदिकी सार्वत्रिकी चोद्घोषणा जज्ञे । तदनु चैकदा महाराजैः पाठ्यविधीयमाननभोवार्षिकविप्रविप्रतिपत्तौ तच्छिक्षाकरणपूर्वकं श्रीगुरुभिः कारिता श्रीगुरूक्तां नभस्यवार्षिकव्यवस्थापिकासिद्धान्तार्थयुक्तिमाकर्ण्य तुष्टो राजा जयवादपत्राणि७ स्वमुद्राङ्कितानि श्रीगुरुभ्यः प्रसादादुपढौकयति स्म प्रतिपक्षस्य च पराजितस्य तादृशराजनीतिमासूत्र्य श्रीराम इव सम्यग् न्यायधर्मं सत्यार्पितवान ।किञ्च कियदेतदस्मद्गुरूणाम् ।

यतः ।

यैर्जिग्ये मलकापुरे विबुदिपुर्मूलाभिधानो मुनिः
श्रीमज्जैनमतं यवन्नुतिपदं नीतं प्रतिष्ठानके ।
भट्टानां शतशोऽपीयत्सु मिलितामूद्दीप्ययुक्तिर्जिता
यैर्मौनं श्रयितः स बोरिदपुरे वादीश्वरो देवजी ॥ १ ॥

जैनन्यायगिरा विवादपदवीमारोप्य निर्घोटितो
प्राचीदेशगजालणापुरवरे दिगम्बराचार्यराट् ।
श्रीमद्रामनरेन्द्रसंसदि किलात्मारामवादीश्वरः
कस्तेषां च विवेकहर्षसुधियामग्रे धराचन्द्रकः ॥ २ ॥

किं चास्मद्गुरुवक्त्रनिर्गतमहाशास्त्रामृताब्धौ रतः
सर्वत्रामितमान्यतामवदधे श्रीमद्गुणादिप्रभोः ।
तद्भक्तये भुजपत्तने व्यरचयत् श्रीभारमल्लप्रभुः
श्रीमद्रायविहारनाम जिनपप्रासादमत्यद्भुतम् ॥ ३ ॥

अथ च सं० १६५६ वर्षे श्रीकच्छदेशान्तर्जेसलामण्डले विहरद्भिः श्रीगुरुभिः प्रबलधनधान्याभिरामं श्रीखाखरग्रामं प्रतिबोध्य सम्यग् धर्मक्षेत्रं चक्रे यत्राधीशो महाराजश्रीभारमल्लजी भ्राता कुंअरश्रीपञ्चायणजी प्रमदप्रबलपराक्रमाक्रान्तदिक्चक्रश्चक्रबन्धुप्रतापतेजा यस्य पट्टराज्ञी पुष्पाम्बाइप्रभृति तनूजाः कुं० दुजाजी- हाजाजी- भीमजी- देसरजी-देवोजी- कमोजी- नामानो रिपुगजघटाकेशरिणस्तत्र च शतशः श्रीओशवालगृहाणि सम्यग् जिनधर्मं प्रतिबोध्य सर्वश्राद्धसामाचारीशिक्षणेन च परमश्राद्धीकृतानि तत्र च ग्रामग्रामणी भद्रकत्वदानशूरत्वादिगुणोपार्जितयशःप्रसरकर्पूरपूरसुरभीकृतब्रह्माण्डभाण्डः शा० वयरसिकः सकुटुम्बः श्रीगुरुणा तथा प्रतिबोधितो यथा तेन घङ्कर शा० शिवापेथाप्रभृतिसमवहितेन नव्योपाश्रयः श्रीतपागणधर्मराजधा-

नीव चक्रे तथा श्रीगुरूपदेशेनैव गुर्जरधरित्र्याः शिलातक्षकाना-
कार्यं श्रीसम्भवनाथप्रतिमा कारिता । शा॰ वयरसिकेन तत्सुतेन
शा॰ सायरनाम्ना मूलयनायकश्रीआदिनाथप्रतिमा ३ शा॰ वीज्जा-
ख्येन ३ श्रीविमलनाथप्रतिमा च कारिता । तत्प्रतिष्ठा तु शा॰
वयरसिकेनैव सं॰ १६५७ वर्षे माघसित १० सोमे श्रीतपागच्छ-
नायक भट्टारकश्रीविजयसेनसूरिपरमगुरूणामादेशादस्मद्गुरुश्रीवि-
वेकहर्षगणिकरेणैव कारिता तदनन्तरमेष प्रासादोऽप्यस्मद्गुरूपदे-
शेनैव फाल्गुनासित १० सुमुहूर्ते उवएसगच्छे भट्टारक श्रीकक्क-
सूरिबोधितश्रीआणन्दकुशलश्राद्धेन ओशवालज्ञातीयपारिपिगोत्रे
शा॰ वीरा पुत्र डाहा पुत्र जेठापुत्र शा॰ लाखणपुत्ररत्नेन शा॰
वयरसिकेन पुत्र शा॰ रणवीर शा॰ सायर शा॰ महिकरण स्नुषा
उमा-रामा-पुरी पौत्र शा॰ मालदेव शा॰ राजा, खेतल, खेमराज,
वणवीर, दीदा वीराप्रमुखकुटुम्बयुतेन प्रारेभे । तत्र सान्निध्यका-
रिणौ घड्डरगोत्रीयौ पौर्णमीयककुलगुरुभट्टारकश्रीनिश्राश्राद्धौ
शा॰ कन्थडसुत शा॰ नागीआ शा॰ मेरगानामानौ सहोदरौ सुत
शा॰ पाचा शा॰ महिपालामलप्रसादात् कुटुम्बयुतौ प्रसादोऽयं
श्रीशत्रुंजयावताराख्यः सं॰ १६५७ वर्षे फा॰ कृ॰ १० दिने
प्रारब्धः । सं॰ १६५९ वर्षे फा॰ शु॰ १० दिनेऽत्र सिद्धिपदवी-
मारुरोह । आनन्दाच्च कच्छमण्डनश्रीखाखरिनगरसङ्घे श्रेयश्च सं॰
१६५९ वर्षे फा॰ सुद १० दिने पं॰ श्रीविवेकहर्षगणिभिर्जिने-
श्वरतीर्थविहारोऽयं प्रतिष्ठितः । प्रशस्तिरियं विद्याहर्षगणिभिर्विर-
चिता संवतो वैक्रमः ।



# स्तंभनपुरस्थलेखाः ।



( ४४७ )

ओं अर्ह ॥ संवत् १३६६ वर्षे प्रतापाक्रांतभूतलश्रीअलावदीन सुरत्राणप्रतिशरीरश्रीअलपखानविजयराज्ये श्रीस्तम्भतीर्थे श्रीसुधर्मास्वामिसंताननभोनभोमणिसुविहितचूडामणिप्रभुश्रीजिनेश्वरसूरिपट्टालङ्कारप्रभुश्रीजिनप्रबोधसूरिशिष्यचूडामणियुगप्रधानप्रभुश्रीजिनचन्द्रसूरिसुगुरूपदेशेन उकेशवंशीयसाहजिनदेव साहसहदेवकुलमण्डनस्य श्रीजसलमेरौ श्रीपार्श्वनाथविधिचैत्यकारितश्रीसम्मेतशिखरप्रासादस्य साहकेसवस्य पुत्ररत्नेन श्रीस्तम्भतीर्थे निर्मापितसकलस्वपक्षपरपक्षचमत्कारिनानाविधमार्गणलोकदारिद्र्यमुद्रापहारिगुणरत्नाकरस्य गुरुगुरुतरपुरप्रवेशकमहोत्सवेन संपादितश्रीशत्रुंजयोज्जयंतमहातीर्थयात्रासमुपार्जितपुण्यप्राग्भारेण श्रीपत्तनसंस्थापितकोट्टडिकालङ्कारश्रीशान्तिनाथविधिचैत्यालय श्रीश्रावकपौषधशालाकारापणोपार्जितपसूमरयशःसंभारेण भ्रातृसाहराजुदेव साहबोलिय साहजेहड साहलषपति साहगुणधर पुत्ररत्न साह जयसिंह साहजगधर साहसलषण साहरत्नसिंह प्रमुखपरिवारसारेण श्रीजिनशासनप्रभावकेण सकलसाधर्मिवत्सलेन साहजेसलसुश्रावकेण कोट्टडिकास्थापनपूर्वं श्रीश्रावकपोषधशालासहितः सकलविधिलक्ष्मीविलासालयः श्रीअजितस्वामिदेवविधिचैत्यालयः कारित आचन्द्रार्कं यावन्नन्दतात् ॥ शुभमस्तु । श्रीर्भूयात् श्रमणसङ्घस्य । श्रीः ।

(४४८)

॥ ई० ॥ अर्हं ॥

श्रेयांसि प्रतनोतु वः प्रतिदिनं श्रीनाभिजन्मा जिनो
यस्यांकस्थलसीम्नि केशपटली भिन्नेंद्रनीलप्रभा ।
सोत्कंठं परिरंभसंभ्रमजुषः साम्राज्यलक्ष्म्या · · · · · · ·
· · · · · · · · विटं(*)कंकणकिणश्रेणीव संभाव्यते ॥ १ ॥
सेव्यात्पार्श्वविभुर्नतो फणिपतेः सप्तास्य चूडामणि-
संक्रान्तः किल योऽष्टमूर्तिरजनि स्पष्टाष्टकर्मच्छिदे ।
यद्वक्त्रं दशदिग्जनव्रजमभित्रातुं तथा(*) सेवितुं
यं यत्पादनखाविशत्तनुरभूदेकादशांगोऽपि सः ॥ २ ॥
त्र्यैलोक्यालयसद्मनिर्भयभयप्रध्वंसलीलाजय-
स्तम्भा दुस्तरसप्तदुर्गतिपुरद्वारावरोधार्गलाः ।
प्रीतिप्रोक्षितस(*)प्ततत्त्वविटपिप्रोद्भूतरत्नाङ्कुराः
शीर्षे सप्तभुजङ्गपुङ्गवफणाः पार्श्वप्रभोः पान्तु वः ॥ ३ ॥
लोकालोकलसद्विचारविदुरा विस्पष्टनिःश्रेयस-
द्वारः सारगुणालयस्त्रिभुवनस्तुत्याङ्घ्रिपङ्करुहः ।
श(*)श्वद्विश्वजनीनधर्मविभवो विस्तीर्णकल्याणभा
आद्योऽन्येऽपि मुदं जनस्य ददतां श्रीतीर्थराजः सदा ॥ ४ ॥
दैत्यारिर्नियतावतारनिरतस्तत्रापि कालं मितं
त्रातार्केन्दु भवान्ववाय(*)पुरुषास्तेऽपि त्रुटत्पौरुषाः ।
कः कर्ता दितिसूनुसूदनमिति ध्यातुर्विधातुः पुरा
सन्ध्याम्भश्चुलुकाद्भटो भवदसिं दैत्यैः समं कम्पयन् ॥ ५ ॥
चौलुक्यादमुतः समुद्ररसनोद्धारैकधौरेयता-
दुद्ध(*)र्षादुदभूद्दंचदभयश्चौलुक्यनामान्वयः ।

जातास्तत्र न के जगत्त्रयजयप्रारम्भनिर्दम्भदो-
स्तम्भस्तम्भितविश्वविक्रमचमत्कारोर्ज्जिता भूभुजः ॥ ६ ॥
तेषामुद्दामधाम्नामसमतममहःसंपदां सम्प्रदायै-
र्वीरश्रीदर्प्पणानां दिवसपतिरिव द्योतकोऽभूत् ..... ।
राजार्णोराजनामा रणरुधिरनदीशोणमर्णोधिमरणो
भारैर्द्विट्स्त्रैणसांद्रांजननयनभवैः श्यामतामानयद्यः(*)॥ ७ ॥
यस्यासिः समराम्बरे बुधरवद्धारा प्रपातै रिपु-
स्त्रीगण्डस्तनभित्तिचित्ररचनाः स्मर्तव्यमात्राः सृजन् ।
तेने कामपि तां प्रतापतडितं यस्याद्युतिर्द्योतते
ऽद्यापि स्थाणुललाटलोचनदिनस्वाम्योर्व्ववह्निच्छ(*)लात् ८
अङ्गचङ्गिमतरङ्गिनरङ्गा रङ्गदुल्वणांगुणप्रगुणश्रीः ।
राजनीतिरिव यस्य नरेन्दोर्वल्लभाऽजनि सलक्षणदेवी ॥ ९ ।
तस्मिन्निन्दुकलोपदंशकसुधा कल्पद्रुदत्तासव-
स्वादेभ्यो भुनभृजनाधरर(*)सं सम्बुध्यमानेऽधिकम् ।
तत्पुत्रो लवणाब्धितीरविलसद्वीरप्रणादो जय-
प्रासादो लवणप्रसादनृपतिः पृथ्व्याः प्रपेदे पतिः ॥ १० ॥
रणप्रणुन्नारिमनःप्रसादः सधर्म्मकर्म्माप्तशिवप्रसादः(*) ।
दानप्रतानक्षतविप्रसादः कस्यानमस्यो लवणप्रसादः ॥११॥
खेदी चेदीश्वरोभूदुरुभयतरलः कुन्तलः कामरूपः
कामं निष्कामरूपः कलहकलहयच्छेदशीर्णो दशार्णः ।
काम्बोजस्त्रु(*)ट्यदोजः स्थितिरतिसरलः केरलः सूरसेन-
स्वामी निःशूरसेनः प्रसरति परितो यत्र दिग्जैत्रयात्रे॥१२॥
रम्यसर्वविषयाद्भुतलक्ष्मीकाननाशिखरिजातिमनोन्या(ज्ञा) ।
प्रेयसी मदनदेवीरमन्दं त(*)स्य संमदमदत्त महीव ॥ १३ ॥
किं नो स्वप्नतयाथ निर्ज्जरतया मृत्युंजयत्वेन वा

नित्यं दैत्यजयोद्यमेन नयतः प्राणप्रियाकेलयः ।
इत्यर्ति द्युसदां रणैर्दनुजनुर्निर्दारणैर्दारुणै-
र्लुम्पत्यत्र(*)सुतोऽस्य वीरधवलो भारं बभार क्षितेः ॥१४॥

श्रीदेव्या नव्यनीलोत्पलदलपटली कल्पिता केलिशय्या
स्फुर्ज्जद्वाहुप्रवहो निखिलरिपुवनप्रोषिणो धूमपंक्तिः ।
वीरत्वे दृष्टिदोषोच्छ्(*)यविलयकृते कज्जलस्यांकलेषा(खा)
पाणौ कृष्टारिलक्ष्म्याः श्लथतरकवरी यस्य रेजेऽसियष्टिः ॥१५॥

भूपस्यास्य प्रतापं भुवनमभिभविष्यन्तमत्यन्ततापं
जाने ज्ञानेन मत्वा पृथुदवथुभिया पूर्वमेव प्रतेने । (*)
वह्निर्वेश्माग्रभाले शशिकरशिशिरस्वर्धुनीसन्निधाने
वार्द्धार्वौर्वो निवासं पुनरिह मिहिरो मज्जनोन्मज्जनानि ॥१६॥

गौरीभूतभूजङ्गपकांचिता रुचिपीतकालकूटघटा ।
अकलङ्कितविधून्यविधुर्यन्कौ(*)त्तिर्जयति शिवमूर्त्तिः ॥१७॥

बहुविग्रहसङ्करचितमहसा धनपरमहेलया श्रितया ।
जयलक्ष्म्येव सदेव्या वयजलदेव्या दिदेव नरदेवः ॥ १८ ।

तस्मिन शम्भुसभासदां विदधति प्रौढप्रभावप्रभा
प्राग्भारैः परमेश(*)दर्शनपरानन्दस्पृशां विस्मयम् ।
तज्जन्मा जगतीपतिर्विजयते विश्वत्रयीविश्रुतः
श्रीमान् विश्वलदेव इत्यरिवलक्ष्मान्तेषु शल्यं क्षिपन् ॥१९॥

यं युद्धसज्जमपि चापधरं निरीक्ष्य स्वप्ने विपक्षनृपतिः प्रति

. . . . . . . . . . . . . . . .

( ४४९ )

(1) . . . . . . . . . . । . . . . . . . . . तो जातं विघ्नवि-
ध्वंसदैवतं ॥ १ ॥ शठदलकमठेन ग्रावसङ्घातमुक्तं प्रश-
मकुलिशवह्नेः

(2) . . . . . . . . . . . . . . . . . . . . . . . . . . . .
श्रियं वः ॥ २ ॥ आंदामिन्येन येनेह विजितारातिवा-
हिनी । पार्श्वनाथजिनं नौमि कौमारं मारसंस्तुनम् ॥३॥

(3) . . . . . . . . . . . . . . . . . . . . . . . . . . .
दिनोदयं स चक्रे गुरुगगनाभ्युदितः महस्वकीर्त्तिः ॥४॥
संवत् ११६५ वर्षे ज्येष्ठ वदि ७ सोमे सजय(ति)

(4) . . . . . . . . . . . . . . . . पाति जगन्ति॥५॥
दिव्ये गुर्जरमण्डले ऽतिविपुले वंशोऽनिंदीमद्युतिश्चौलुक्यो
विदितः परैरकलितः श्वेतातपत्रोज्ज्वलः॥ क्ष्मा

(5) . . . . . . . . . . . . . . . . . . . . रागतोनिजभुजो-
पार्ज्यां च राज्यश्रियम् ॥ ६ ॥ श्रीमान् लूणिगदेव एव
त्रिजयिअम्भुप्रसादोदितस्तस्माद्वीरसैकत्वारिधवलः पुत्रः
प्रजापालकः

(6) . . . . . . . . . . . . . . . . जयी येनाधीशमुदस्य
कन्दमिव तं कीर्तेः पुना रोपितं ॥ ७ ॥ रिपुमल्लप्रमर्दी यः
प्रतापमल्ल इंडितः॥ तत्सूनुरर्ज्जुनो राजा राज्येऽजन्यर्ज्जु-
नो परः ॥ ८ ॥ ऊ

(7) . . . . . . . . . . . . . . क्ति विजयी परेषां । तन्नन्द-
नोऽनिन्दितकीर्त्तिरस्ति ज्येष्ठोऽपि रामः किमु कामदेवः

॥ ९ ॥ उभौ धुरं धारयतः प्रजानां पितुः पदस्यास्य च धुर्यकल्पौ । कल्पद्रुमौ

(8) . . . . . . . . . . . . णौभुवि रामकृष्णौ ॥ १० ॥ श्रीस्तम्भतीर्थं तिलकं पुराणां स्तम्भं जयश्रीमहितं महद्भिः । आस्ते पुरं प्रौढिममोढवंशे सुभूषिते भूपतिवर्णनीये ॥ ११ ॥ निदर्शनं साधुसुसत्यसन्धौ वं

(9) . . . . . . . . . कीर्तिरामः । खलाख्यया यो विदितो महर्द्धिर्वृद्धिं गतो धर्म्मधनी विनीतः ॥ १२ ॥ रूपलक्षणसौभाग्यधर्म्मदाननिदर्शनं जाता या मोढनारीषु सातोऽस्य बादडा . . . . ॥ १३ ॥ सं . . .

(10) . . . . देशात्साध्वी ह्यकार्षीज्जिनपार्श्वचैत्यं यन्मण्डलं नागपतेः फणाग्ररत्नं नु किं पुण्यममूर्त्तमस्याः ॥ १४ ॥ अविकलगुणलक्ष्मीर्विकलः मूनुराजः समभवदिह पुण्यः शीलसत्या स

(11) . . . . . . . . . . लमुदयस्थं तनयोर्येन चंक रविरिव भुवनं यो मानितः सर्वलोकैः ॥ १५ ॥ सवितृचैत्यस्य पुरः सुमण्डपं योऽकारयत्पूज्यसुधर्म्ममण्डनं । स्वसा च तस्याजनि रत्नसञ्ज्ञिका सुरत्नसूर्या धर्नामिहगेहिनी

(12) ॥ १६ ॥ श्रीमदआल्हणनाकलत्रयजलश्रीमदगुणिमाग्राः । तयोर्बभूवुस्तनया निजवंशोद्धरणधौरेयाः ॥१७॥ पितृव्यकसुतैः सार्द्धं यशोवीरो यशोधनः । पालयत्यस्ति पुण्यात्मा शैवं धर्म्मं जिनस्य च

(13) ॥ १८ ॥ आस्वडपुत्रौ . . . सुपदनपालाभिधौ धन्यौ

वृत्तानन्दितलोकौ प्रीत्या रामलक्ष्मणसदृक्षौ (क्षौ)।।१९।। जाया जाल्हणदेवीति स्वजनकैरवकौमुदी । तस्य पुत्रौ तया प्रसुतौ शब्दार्थाविव भारतीदेव्या ॥ २० ॥ षे-(खे) तलः क्षितिपति-

( 14 ) गुणिगण्यो योऽच्छलत्कलियुगं सुविवेकात् सिंहशावव-दभीर्विजयादिसिंहविश्रुत इलेन्दुरयं किं ॥ २१ ॥ दिवं गते भ्रातरि तस्य सूनौ लालाभिधे धर्म्मधुरीणमुख्ये श्रेयोर्थमस्यैव जिनेन्द्रचैत्ये येनेह जी-

( 15 ) र्णोद्धरणं कृतं तु ॥२२॥ जयताद्विजयासिंहः कलिकुम्भि-कविदारणैककृतयत्नः । निजकुलमण्डनभानुर्गुणी दीनो-द्धरणकल्पतरुः ॥ २३ ॥ सद्वृत्तविमलकीर्त्तिस्तस्यासी-द्गुणवंशभूः पुण्यपटोदयक्ष्माभृत पठप · · ·

( 16 ) षदीधिती ॥ २४ ॥ अनूपमा नाम सुवृत्तताऽपि श्रिया-दिदेवीत्युभयं तु जाये । पुरांगवन्धोरभवश्च तस्य कान्ता वरा सूहवी धर्म्मशीला ॥ २५॥ देवसिंहः सुतो-ऽप्यस्य मेरुवन्महिमास्पदं दीपवद् द्योतितं येन कुलं चार्थीयमा · · · · · · · · ·

( 17 ) ॥ २६ ॥ गुरुपट्टे बुधवर्ण्यो यशःकीर्तिर्यशोनिधिः । तद्बोधादर्हतः पूजां यः करोति त्रिकालजां ॥ २७ ॥ हुङ्कारवंशजमहर्धमणीयमानः श्रीसाङ्कणः प्रगुणपुण्यकृता-वतारः । तारेशसन्निभयशोजिनशा-

( 18 ) सनार्हो निःशेषकल्मषविनाशनभव्यवर्णः ॥ २८ ॥ सिं-हपुरवंशजन्मा जयताख्यो विजित एनसःपक्षः ।

शुभधर्म्ममार्गचारी जिनभूमौ ननु च कल्पतरुः ॥ २९ ॥ प्रल्हादनो महाभव्यो जिनपूजापरायणः । पात्रदानामृतेनैव क्षालितं वसुधात-

( 19 ) लम् ॥ ३० ॥ अपरं च अत्राऽगमन्मालवदेशतोऽमी सपादलक्षादथ चित्रकूटात् । आभानुजेनैव समं हि साधुर्यः शाम्भदेवो विदितोऽथ जैनः ॥ ३१ ॥ धान्धुर्बुधः साधुकल्हः प्रवुद्धो धन्यो धरित्र्यां धरणीधरोऽपि । श्रीसङ्घभ....

( 20 ) मुनिमानसाधुर्हाल्हस्तथा राहड इन्दुदर्शी ॥ ३२ ॥ साधुर्गजपतिर्मान्यो भूपवेश्मसु सर्वदा । राजकार्यविधौ दक्षो जिनश्रीस्कन्धधारकः ॥ ३३ ॥ नरवेषेण धर्म्मोऽयं धामा नामा स्वयं भुवि । सुतोत्तमो विनीतोऽस्य जिनचिन्तामणिप्रभुः

( 21 ) ॥ ३४ ॥ नाम्ना नभोपतिरिहाधिपमाननीयः साधुः सुभक्तः सुहृदः प्रसिद्धः । नोडेकितः साधुमदात्कदापि यो दानशौण्डः शुभसौ( शौ )ण्डनामा ॥ ३५ ॥ धेहडोऽपि सुधर्म्मस्थः साधुः सोमश्च सौम्यधीः । दानमण्डनसौभाग्य .......

( 22 ) कः सतां मतः ॥ ३६ ॥ अजयदेव इह प्रकटो जने तदनु खेतहरिः कुशलो जयी । अनुजपूनहरिर्हरिविक्रमः सुजननाम इहापि परिश्रुतः ॥ ३७ ॥ सल्लक्षणो बापण नामधेयो देदो विदां श्रेयतरश्च साधुः । सना .....

( 23 ) पुरेन्द्रो जिनपूजनोद्यतो रत्नोऽपि रत्नत्रयभावनारतः ॥ ३८ ॥ छाजुः सुधीः पण्डितमानमर्द्दनः साधुः सदा-

दानरतश्च जैनः। एते जिनाभ्यर्चनपात्रभक्ताः श्रीपार्श्व-
नाथस्य विलोक्य पूजां ॥३९॥ सम्भूय सर्वैर्विधिवत्सु-
( 24 ) भव्यपूजाविधानाय विवेकदक्षैः। श्रीधर्म्मवृद्धः प्रभवाय
शश्वत्कीर्त्तिस्थितिः सुस्थितकं महद्भिः ॥ ४० ॥ वस्त्र-
खण्डतथा कुष्टमुरुमांसीसटंकणा। चमरङ्गाद्यसद्द्रव्य-
माळत्या वृषभं प्रति ॥ ४१ ॥ एको द्रम्मस्तथा........
( 25 ) मालतोलघुवस्तुतः। गुडकम्बलतैलाद्यनङ्गडादिवृषं प्रति
॥ ४२ ॥ श्रीपार्श्वनाथचैत्येऽस्मिन द्रमार्द्धं स्थितके कृतं।
भव्यलोकस्य कामानां चिन्तामणिफलप्रदं ॥ ४३ ॥
संवत् १२९२ वर्षे श्रीविक्रमसमतीतवर्षेषु
( 26 ) त्रिशता समं द्विपञ्चाशद्दिनैरेवं कालेऽस्मिन् रोपितं ध्रुवं
॥४४॥ यावत्तिष्ठन्ति सर्वज्ञाः शाश्वतप्रतिमामयाः। ताव-
न्नन्द्यादिमे भव्याः स्थितकं चात्रमङ्गलम् ॥ ४५ ॥
श्रीमान सारङ्गदेवः पुरवरमहितः स्तम्भतीर्थं सुतीर्थं नं-
( 27 ) द्याचैत्यं जिनानामनघगुरुकुलं श्रावका दानधन्याः।
नानातेजाधनाद्याः सुकृतपथपुषो मोपनामाहराव्ह-
देवो राजादिदेवो जिनभवनविधौ मुख्यता ये गतास्ते
॥ ४६ ॥ भावाढ्यो भावभूपस्व-
( 28 ) जनपरिवृतो भोजदेवोऽपि दाता जैने धर्म्मेऽनुरक्ताः श्रुति-
गुणसहिताः साल्हरत्नौ वदान्यौ। अन्ये केऽपि सन्तः
स्थितकमिह सदा पालयन्त्यत्र वृद्धिं पुष्णन्तस्तेषु पार्श्वो
विदधतु विपुलां.........
( 29 ) तौ तामहाश्रीः ४७ ॥ छ ॥ ६४ ॥ प्रशस्तिरियं लिखिता
ठ० सोमेन उत्कीर्णा सूत्र० पाल्हाकेन ॥

( ४५० )

॥ ओं ॥

श्रेयःसन्ततिधाम कामितमनःकामद्रुमांभोधरः
पार्श्वः प्रीतिपयांजिनीदिनमणिश्चिन्तामणिः पातु वः ।
ज्योतिःपङ्क्तिरिवाब्जिनीप्रणयिनं पद्मोत्करोल्लासिनं
सम्पत्तिर्न जहाति यच्चरणयोः सेवां सृजन्तं जनम् ॥ १ ॥
श्रीसिद्धार्थनरेशवंशसरसीजन्माब्जिनीवल्लभः
पायाद्वः परमप्रभावभवनं श्रीवर्द्धमानः प्रभुः ।
उत्पत्तिस्थितिसंहृतिप्रकृतिवाग् यद्गीर्जगत्पावनी
स्वर्वापीव महाव्रतिप्रणयभूरासीद् रसोल्लासिनी ॥ २ ॥
आसीद्वासववृन्दवन्दितपदद्वन्द्वः पदं सम्पदां
तत्पट्टांबुधिचन्द्रमा गणधरः श्रीमान् सुधर्माभिधः ।
यस्यौदार्ययुता प्रहृष्टसुमना अद्यापि विद्यावनी
धत्ते सन्ततिरुन्नतिं भगवतो वीरप्रभोर्गौरिव ॥ ३ ॥
बभूवुः क्रमतस्तत्र श्रीजगच्चन्द्रसूरयः ।
यैस्तपाबिरुदं लेभे बाणसिद्ध्यर्कवत्सरे (१२८५) ॥ ४ ॥
क्रमेणास्मिन् गणे हेमविमलाः सूरयोऽभवन् ।
तत्पट्टे सूरयोऽभवन्नानन्दविमलाभिधाः ॥ ५ ॥
साध्वाचारविधिपथःशिथिलतः सम्यक्श्रियां धाम यै-
रुद्धे स्तनसिद्धिसायकसुधारोचिर्मिते (१५८२) वत्सरे ।
जीमूतैरिव यैर्जगत्पुनरिदं तापं हरद्भिर्भृशं
सश्रीकं विदधे गवां शुचितमैः स्तोमैरसोल्लासिभिः ॥ ६ ॥
पद्माश्रयैरलमलं क्रियते स्म तेषां
पीणिन्यवासि जगतां कमलोदयेन ।

पट्टः प्रवाह इव निर्झरनिर्झरिण्याः
शुद्धात्मभिर्विजयदानमुनीशहंसैः ॥ ७ ॥
तत्पट्टपूर्वपर्वतपयोजिनीप्राणवल्लभप्रतिमाः ।
श्रीहीरविजयसूरिप्रभवः श्रीधाम शोभन्ते ॥ ८ ॥
ये श्रीफतेपुरं प्राप्ताः श्रीअकब्बरशाहिना ।
आहूता वत्सरे नन्दानलर्तुशशभृन्मिते (१६३९) ॥ ९ ॥
निजाशेषेषु देशेषु शाहिना तेन घोषितः ।
षाण्मासिको यदुक्त्योच्चैरमारिपटहः पटुः ॥ १० ॥
स श्रीशाहिः स्वकीयेषु मण्डलेष्वखिलेष्वपि ।
मृतस्वं जीजिआख्यं च करं यद्वचनैर्जहौ ॥ ११ ॥
दुस्त्यजं तत्करं हित्वा तीर्थं शत्रुंजयाभिधम् ।
जैनसाधद्विरा चक्रे क्ष्माशक्रेणामुना पुनः ॥ १२ ॥
ऋषीश्रीमेघजीमुख्या लुम्पाका मतमात्मनः ।
हित्वा यच्चरणद्वन्द्वं भेजुर्भृङ्गा इवाम्बुजम् ॥ १३ ॥

तत्पट्टमब्धिमिव रम्यतमं सृजन्तः
स्तोमैर्गवां सकलसन्तमसं हरन्तः ।
कामोल्लसत्कुवलयप्रणया जयन्ति
स्फूर्जत्कला विजयसेनमुनीन्द्रचन्द्राः ॥ १४ ॥

यत्प्रतापस्य माहात्म्यं वर्ण्यते किमितः परम् !
अस्वप्नाथक्रिरे येन जीवन्तोऽपि हि वादिनः ॥ १५ ॥
सुन्दरादरमाहूतैः श्रीअकब्बरभूभुजा ।
द्राग् यैरलंकृतं लाभपुरं पद्ममिवालिभिः ॥ १६ ॥
श्रीअकब्बरभूपस्य सभासीमंतिनीहृदि ।
यत्कीर्तिर्मौक्तिकीभूता वादिवृन्दजयार्जिता ॥ १७ ॥

श्रीहीरविजयाह्वानसूरीणां शाहिना पुरा ।
अमारिमुख्यं यद्दत्तं यत्साक्षात्सकलं कृतं ॥ १८ ॥

अर्हन्तं परमेश्वरत्वकलितं संस्थाप्य विश्वोत्तमं
साक्षात् शाहिअकब्बरस्य सदसि स्तोमैर्गवामुद्यतैः ।
यैः संमीलितलोचना विदधिरे प्रत्यक्षशूरैः श्रिया
वादोन्मादभृतोद्विजातिपतयो भट्टा निशाटा इव ॥ १९ ॥

सैरभी सौरभेयी च सौरभेयश्च सैरभः ।
न हन्तव्या न च ग्राह्या बन्दिनः केऽपि कर्हिचित् ॥२०॥

येषामेष विशेषोक्तिविलासः शाहिनाऽमुना ।
ग्रीष्मतप्तभुवे वाब्दपयःपूरः प्रतिश्रुतः ॥ २१ ॥

युग्मम् ।

जित्वा विप्रान् पुरः शाहेः कैलास इव मूर्त्तिमान् ।
यैरुदीच्यां यशःस्तम्भः स्वो निचख्ने सुधोज्ज्वलः ॥२२॥

इतश्च—

उच्चैरुच्छलिताभिरूर्मिततिभिर्वारांनिधे बन्धुरे
श्रीगन्धारपुरे पुरन्दरपुरप्रख्ये श्रिया सुन्दरे ।
श्रीश्रीमालिकुले शशाङ्कविमले पुण्यात्मनामग्रणी-
रासीदाल्हणसी परीक्षकमणिर्नित्यास्पदं सम्पदाम् ॥२३॥

आसीद्देल्हणसीति तस्य तनुजो जज्ञे धनस्तत्सुत-
स्तस्योदारमनाः सनामुहलसी संज्ञोऽभवन्नन्दनः ।
तस्याभूत्समराभिधश्च तनयस्तस्यापि पुत्रोऽर्जुन-
स्तस्यासीत्तनयो नयोर्ज्जितमतिर्भीमाभिधानः सुधी ॥२४॥

लालूरित्यजनिष्ट तस्य गृहिणी पद्मेव पद्मापते-
रिभ्योऽभूत्तनयोऽनयोश्च प्रसिआम्पकः सुपर्वप्रियः ।

पौलोमीसुरराजयोरिव जयः पित्रोर्मनःप्रीतिकृद्
विष्णोः सिन्धुसुतेव तस्य जसमादेवीति भार्याऽभवत् ।२५।
सद्धर्मं सृजतोस्तयोः प्रतिदिनं पुत्रावभूतामुभा-
वस्त्येको वजिआभिधः सदभिधोऽन्यो राजिआह्वः सुधीः ।
पित्रोः प्रेमपरायणौ सुमनसां वृन्देषु वृन्दारकौ
शर्व्वाणीस्मरवैरिणोरिव महासेनैकदन्ताविमौ ॥ २६ ॥
आद्यस्य विमलादेवी देवीव शुभगाकृतिः ।
परस्य कमलादेवी कमलेव मनोहरा ॥ २७ ॥
इत्यभूतामुभे भार्ये द्वयोर्बान्धवयोस्तयोः ।
ज्यायसो मेघजीत्यासीत्सनुः कामो हरेरिव ॥ २८ ॥
युग्मम ।

सुस्निग्धौ मधुमन्मथाविव मिथो दस्राविव प्रोल्लस-
द्रूपौ ख्यातिभृतौ धनाधिपसतीनाथाविव प्रत्यहम् ।
अन्येद्युर्बृहदिभ्यसभ्यसुभगं श्रीस्तम्भतीर्थं पुरं
प्राप्तौ पुण्यपरम्पराप्रणयिनौ तौ द्वावपि भ्रातरौ ॥ २९ ॥
तत्र तौ धर्म्मकर्म्माणि कुर्व्वाणौ स्वभुजार्ज्जिताम् ।
श्रीयं फलवतीं कृत्वा प्रसिद्धिं प्रापतुः पराम् ॥ ३० ॥
काबिल्लादिकपतिरकब्बरसार्व्वभौमः
स्वामी पुनः परतकालनृपः पयोधेः ।
कामं तयोरपि पुरः प्रथिताविमौस्त-
स्तत्तद्दिशोरसदृशोरनयोः प्रसिद्धिः ॥ ३१ ॥
तेषां च हीरविजयव्रतिसिन्धुराणां
तेषां पुनर्विजयसेनमुनीश्वराणाम् ।
वाग्भिर्सुधाकृतसुधाभिरिमौ सहोदरौ
द्राग् द्वावपि प्रमुदितौ सुकृते बभूवतुः ॥ ३२ ॥

श्रीपार्श्वनाथस्य च वर्द्धमान
प्रभोः प्रतिष्ठां जगतामभीष्टाम् ।
घनैर्धनैः कारयतः स्म बन्धू तौ
वार्द्धिपाथोऽब्धिकलामितेऽब्दे १६४४ ॥ ३३ ॥

श्रीविजयसेनसूरिर्निर्म्ममे निर्म्ममेश्वरः ।
इमां प्रतिष्ठां श्रीमद्भक्तैरत्नाकरकौमुदीम् ॥ ३४ ॥

चिन्तामणेरिवात्यर्थं चिन्तितार्थविधायिनः ।
नामास्य पार्श्वनाथस्य श्रीचिन्तामणिरित्यभूत् ॥ ३५ ॥

अङ्गुलैरेकचत्वारिंशता चिन्तामणेः प्रभोः ।
संमिता शोभते मूर्त्तिरेषा शेषाहिसेविता ॥ ३६ ॥

सदैव विध्यापयितुं प्रचण्ड-
भयप्रदीपानिव सप्तसर्प्पान् ।
योऽवस्थितः सप्त फणान् दधानो
विभाति चिन्तामणिपार्श्वनाथः ॥ ३७ ॥

लोकेषु सप्तस्वपि सुप्रकाशं
किं दीप्रदीपा युगपद्विधातुम् ।
रेजुः फणाः सप्त यदीयमूर्ध्नि
मणित्विषा ध्वस्ततमःसमूहाः ॥ ३८ ॥

सहोदराभ्यां सुकृतादराभ्या-
माभ्यामिदं दत्तबहुप्रमोदम् ।
व्यधायि चिन्तामणिपार्श्वचैत्य-
मपत्यमुर्व्वीधरभित्सभायाः ॥ ३९ ॥

निकामं कामितं कामं दत्ते कल्पलतेव यत्
चैत्यं कामदनामैतत् सुचिरं श्रियमश्नुताम् ॥ ४० ॥

उत्तम्भा द्वादश स्तम्भा भान्ति यत्रार्हतो गृहे ।
प्रभूपास्त्यै किमऽभ्येयुः स्तम्भरूपभृतोंशवः ॥ ४१ ॥
यत्र प्रदत्तदृक्शैत्ये चैत्ये द्वाराणि भान्ति षट् ।
षण्णां प्राणभृतां रक्षार्थिनां मार्गा इवागतेः ॥ ४२ ॥
शोभन्ते देवकुलिकाः सप्त चैत्येऽत्र शोभनाः ।
सप्तर्षीणां प्रभुपास्त्यै सद्विमाना इवेयुषाम् ॥ ४३ ॥
द्वौ द्वारपालौ यत्रौच्चैः शोभेते जिनवेश्मनि ।
सौधर्म्मेशानयोः पार्श्वसेवार्थं किमितौ पती ॥ ४४ ॥
पञ्चविंशतिरुत्तङ्गा भान्ति मङ्गलमूर्त्तयः ।
प्रभुपार्श्वे स्थिताः पञ्चव्रतानां भावाना इव ॥ ४५ ॥
भृशं भूमिगृहं भाति यत्र चैत्ये महत्तरम् ।
किं चैत्यश्रीदिदृक्षार्थमितं भवनमासुरम् ॥ ४६ ॥
यत्र भूमिगृहे भाति सोपानी पञ्चविंशतिः ।
मार्गालिरिव दुरितक्रियातिक्रान्तिहेतवे ॥ ४७ ॥
संमुखो भाति सोपानोत्तारद्वारिद्विपाननः ।
अन्तःप्रविशतां विघ्नविध्वंसाय किमीयिवान् ॥ ४८ ॥
यद्भाति दशहस्तोच्चं चतुरस्रं महीगृहम् ।
दशदिक्सम्पदां स्वैरोपवेशायेव मण्डपः ॥ ४९ ॥
षड्विंशतिर्विबुधवृन्दवितीर्णहर्षा
   राजन्ति देवकुलिका इह भूमिधाम्नि ।
आद्यद्वितीयदिननाथरवीन्दुदेव्यः
   श्रीवाग्युताः प्रभुनमस्कृतये किमेताः ॥ ५० ॥
द्वाराणि सुप्रपञ्चानि पञ्च भान्तीह भूगृहे ।
जिघत्सवोंऽहोहरिणान् धर्म्मसिंहमुखा इव ॥ ५१ ॥

द्वौ द्वास्थौ द्वारदेशस्थौ राजतो भूमिधामनि ।
मूर्त्तिमन्तौ चमरेन्द्रधरणेन्द्राविव स्थितौ ॥ ५२ ॥

चत्वारश्चमरधरा राजन्ते यत्र भूगृहे ।
प्रभुपार्श्वे समायाता धर्म्मास्त्यागादयः किमु ॥ ५३ ॥

भाति भूमिगृहे मूलगर्भागारेऽतिसुन्दरे ।
मूर्त्तिरादिप्रभोः सप्तत्रिंशदंगुलसंमिता ॥ ५४ ॥

श्रीवीरस्य त्रयस्त्रिंशदङ्गुला मूर्त्तिरुत्तमा ।
श्रीशान्तेश्च सप्तविंशत्यङ्गुला भाति भूगृहे ॥ ५५ ॥

यत्रोद्धता धराधाम्नि शोभन्ते दश दन्तिनः ।
युगपज्जिनसेवार्थं दिशामीशा इवाययुः ॥ ५६ ॥

यत्र भूमिगृहे भान्ति स्पष्टमष्ट मृगारयः ।
भक्तिभाजामष्टकर्म्मगजान् हन्तुमिवोत्सुकाः ॥ ५७ ॥

श्रीस्तम्भतीर्थपूर्भूमिभामिनीभालभूषणम् ।
चैत्यं चिन्तामणेर्वीक्ष्य विस्मयः कस्य नाभवत् ॥ ५८ ॥

एतौ नितांतमतनु तनुतः प्रकाशं
यावत् स्वयं सुमनसां पथि पुष्पदन्तौ ।
श्रीस्तम्भतीर्थधरणीरमणीललामं
तावच्चिरं जयति चैत्यमिदं मनोज्ञम् ॥ ५९ ॥

श्रीलाभविजयपण्डिततिलकैः समशोधि बुद्धिधनधुर्यैः ।
लिखिता च कीर्त्तिविजयाभिधेन गुरुबान्धवेन मुदा ॥ ६० ॥

वर्णिनीव गुणाकीर्ण्णा सदलङ्कारवृत्तिभाग ।
एषा प्रशस्तिरुत्कीर्णा श्रीधरेण सुशिल्पिना ॥ ६१ ॥

श्रीकमलविजयकोविदशिशुना विबुधेन हेमविजयेन ।
रचिता प्रशस्तिरेषा कनीव सदलङ्कृतिर्जयति ॥ ६२ ॥

इति श्रीपरीक्षक प्रधान प० वजिआ प० राजिआनामसहोदरनिर्म्मापितश्रीचिन्तामणिपार्श्वजिनपुङ्गवप्रासादप्रशस्तिः सम्पूर्णा । भद्रंभूयात् ॥

ओं नमः। श्रीमद्विक्रमातीत संवत् १६४४ वर्षे प्रवर्त्तमानशाके १५०२ गंधारीय प० जसिआ तद्भार्या बाई जसमादे सम्प्रति श्रीस्तम्भतीर्थवास्तव्य तत्पुत्र प० वजिआ प० राजिआभ्यां वृद्धभ्रातृभार्याविमलादे लघुभ्रातृभार्याकमलादे वृद्धभ्रातृपुत्रमेघजी तद्भार्यामयगलदेप्रमुखनिजपरिवारयुताभ्यां श्रीचिन्तामणिपार्श्वनाथ श्रीमहावीर प्रतिष्ठा कारिता । श्रीचिन्तामणिपार्श्वचैत्यं च कारितं । कृता च प्रतिष्ठा सकलमण्डलाखण्डलशाहिश्रीअकब्बरसन्मानित श्रीहीरविजयसूरीशपट्टालङ्कारहारसदृशैः शाहिश्रीअकब्बरपर्षदि प्राप्तवर्णवादैः श्रीविजयसेनसूरिभिः ॥

---

## कावीतीर्थगतलेखाः ।



( ४५१ )

॥ र्द० ॥ ऑं नमः । पातिशाहिश्री६ अकब्बरजलालदीनप्रदत्तबहुमानजगद्गुरुश्रीश्रीश्रीश्रीश्रीश्रीश्रीहीरविजयसूरीश्वरपादानां पट्टप्रभावकेभ्यो भट्टारकश्री५श्रीविजयसेनसूरिगुरुभ्यो नमः ।
श्रेयस्संततिसिद्धिकारिचरितं सर्वेऽपि यं योगिनो
ध्यायन्ति स्थिरतामपक्रमनसो विघ्नान्तरासंक्रमात् ।

श्रीमन्नाभिनरेन्द्रसूनुरमरश्रेणीसमासेवितो
देयान्निर्निभभक्तियुक्तमनसां मुख्यानि सौख्यानि सः ॥ १ ॥
श्रीवर्द्धमानस्य बभूव पूर्वं पूर्वादिकृत्पट्टधरः सुधर्मा ।
गतोऽपि सिद्धिं तनुते जनानां सहायकं यः प्रतिधर्ममार्गम् ॥ २ ॥
ततोऽपि पट्टे नवमे बभूवुः श्रीसूरयः सुस्थितनामधेयाः ।
येभ्यः क्रियाज्ञानगुणाकरेभ्यो गच्छोऽभवत् कोटिकनामतोऽयम् ।३
ततो ये वज्रशाखायां कुले चान्द्रेऽत्र सूरयः ।
तेषां प्रभावं प्रत्येकं वक्तुं शक्नोति कः सुधीः ॥ ४ ॥
पट्टे युगाब्धिप्रमिते क्रमेणाभवन् जगच्चंद्रगणाधिपास्ते ।
येषां सदाचाम्लतपोविधानात् तपा इति प्राग् बिरुदं तदाभूत् ॥५॥
तेषां वंशे क्रमतस्तपःक्रियाज्ञानशुद्धिपरिकलितः ।
रसबाणमिते पट्टे संजातः सुविहितोत्तंसः ॥ ६ ॥
आनन्दविमलसूरिः श्रुतोऽपि चित्ते करोति मुदमतुलाम् ।
कुमतांधकूपमग्नं स्वबलाज्जगदुद्धृतं येन ॥ ७ ॥
तत्पट्टे महिमभरख्याताः श्रीविजयदानसूरीशाः ।
येभ्यः समस्तविधिना प्रससार तपागणः सम्यक् ॥ ८ ॥
तेषां पट्टे प्रकटाः शांतरसापूर्णहृदयकासाराः ।
श्रीहीरविजयगुरवः प्रभवोऽभुवंस्तपागच्छे ॥ ९ ॥
साहिश्रीमदकब्बरस्य हृदयोर्व्यां यः पुरा रोपितः
संसिक्तोऽपि चयैर्वचोऽमृतरसैः कारुण्यकल्पद्रुमः ।
दत्तेऽद्यापि फलान्यमारिपटहोद्घोषादिकानि स्फुटं
श्रीशत्रुंजयतीर्थमुक्तकरतासन्मानमुख्यानि च ॥ १० ॥
तेषां पट्टे प्रकटनहंसाः श्रीविजयसेनसूरिवराः ।
संप्रति जयन्ति वाचकबुधमुनिगणग्रन्थपरिकारिताः ॥ ११ ॥

तर्कव्याकरणादिशास्त्रनिबिडाभ्यासेन गर्वोद्धुरा
ये कुर्चालसरस्वतीतिबिरुदं स्वस्मिन्वहंतेऽनिशम् ।
वाचोयुक्तिभिरेव यैः स्फुटतरं सर्वेऽपि ते वादिनः
साहिश्रीमदकब्बरस्य पुरतो वादे जिताः स्वोजसा ॥ १२ ॥

तेषां चरणसरोरुहमकरंदास्वादलालसः सततम् ।
संघो जयतु चतुर्धा भूयांसि महांसि कुर्वाणः ॥ १३ ॥

इतश्च—

गूर्जरमंडलमंडनमभयं वडनगरमस्ति तत्रासीत् ।
नागरलघुशाखायां भद्रसिआणाभिधे गोत्रे ॥ १४ ॥

गांधिदेपाल इति प्रसिद्धनामा सुधर्मकर्मरतः ।
तत्सुत अलुआह्वानस्तस्य सुतो लाडिकाभिधया ॥ १५ ॥

पत्नीति धर्मपत्नी शीलालंकारधारिणी तस्य ।
तत्कुक्षिभुवौ वाडुक-गंगाधरनामकौ तनयौ ॥ १६ ॥

तत्रापि वाडुआख्यः सुभाग्यसौभाग्यदानयुतः ।
धैर्योदार्यसमेतो जातो व्यवहारिगणमुख्यः ॥ १७ ॥

आद्यस्य पोपटीति च हीरादेवी द्वितीयका भार्या ।
ताभ्यां वराननाभ्यां सुतास्त्रयः सुषुविरे सुगुणाः ॥ १८ ॥

आद्यसुतः कुंवरजीति नामा सुपात्रदानेषु रतो विशेषात् ।
मार्गप्रवृत्तेर्गुणसंग्रहाच्च पितुर्यशो वर्द्धयति प्रकामं ॥ १९ ॥

जातौ परस्यामथ धर्मदासः सुवीरदासश्च सुतौ वरेण्यौ ।
अथान्यदार्थार्जनहेतवेऽसौ स्थानान्तरान्वेषणमानसोऽभूत् ॥२०॥

श्रीस्तंभनाधीशजिनेशपार्श्वप्रसादसंपादितसर्वसौख्यम् ।
त्र्यंबावतीति प्रति नामधेयं श्रीस्तंभतीर्थं नगरं प्रसिद्धम् ॥ २१ ॥

स बाडुआख्यः स्वसुखाय तत्र वसन्ननेकैः सह बन्धुवर्गैः ।
सन्मानसंतानधनैर्यशोभिर्दिने दिने वृद्धिमुपैति सम्यक् ॥ २२ ॥
श्रीहीरसूरेरुपदेशलेशं निशम्य तत्त्वावगमेन सद्यः ।
मिथ्यामतिं यः परिहाय पूर्वं जिनेन्द्रधर्मे दृढवासनोऽभूत् ॥२३॥

पूर्वार्जितप्रबलपुण्यवशेन तस्य
सन्न्यायमार्गसुकृतानुगतः प्रवृत्तेः ।
पापप्रयोगविरतस्य गृहे समस्ता
भेजुः स्थिरत्वमचिरादपि संपदो यः ॥ २४ ॥

सधर्म्मसाधर्मिकपोषणेन मुमुक्षुवर्गस्य च तोषणेन ।
दीनादिदानैः स्वजनादिमानैः स्वसंपदस्ताः सफलीकरोति ॥२५॥

इतश्च--

शत्रुंजयख्यातिमथो दधानं कावीति तीर्थं जगति प्रसिद्धम् ।
काष्ठेष्टकामृन्मयमत्र चैत्यं दृष्ट्वा विशीर्णं मनसेति दध्यौ ॥ २६ ॥

दृढं भवेच्चैत्यमिदं यदीह कृतार्थतामेति ममापि लक्ष्मीः ।
अर्हद्वचोवासितमानसस्य मनुष्यतायाः फलमेतदेव ॥ २७ ॥

ततः श्रद्धावता तेन भूमिशुद्धिपुरःसरम् ।
कावीतीर्थे स्वपुण्यार्थं श्रीनाभेयजिनेशितुः ॥ २८ ॥

नंदवेदरसैणांकमिते संवत्सरे (१६४९) वरे ।
स्वभुजार्जितवित्तेन प्रासादः कारितो नवः ॥ २९ ॥

सारसारस्वतोद्धाररंजितानेकभूधवैः ।
श्रीमद्विजयसेनाख्यसूरिराजैः प्रतिष्ठितः ॥ ३० ॥

मूलस्वामी जिनपतियुगादीश्वरो यत्र भास्वत्
द्वापंचाशत्त्रिदशकुलिकासंयुतः पुण्यसद्म ।

उच्चैरभ्रंलिहशिखरभृत्तोरणैरंचितश्रीः
प्रासादोऽयं धरणीवलये नंदतादाशशांकम् ॥ ३१ ॥
श्रीयुगादिजिनाधीशप्रासादेन पवित्रितः ।
ग्रामोऽपि वर्द्धतामेष सुखसंपत्तिभिश्चिरम् ॥ ३२ ॥

॥ इति प्रशस्तिः ॥

( ४५२ )

अद्येह श्रीगुर्जरमंडले वडनगरवास्तव्यनागरज्ञातीयलघुशाखीयभद्रसिआणागोत्रमुख्यगां । लाडिका । भा० पत्नीसुतेन गां । बादुआख्येन कुंवरजी । धर्मदास । वीरदासाख्यसुतत्रययुतेन संवत् १६४९ वर्षे मार्गसुदि १३ सोमवासरे स्वभुजार्जितबहुद्रव्यव्ययेन कावीतीर्थे स्वपुण्यार्थं सर्वजिन्नामा श्रीऋषभदेवप्रासादः कारितः प्रतिष्ठितश्च तपागच्छेशभट्टारकपुरंदरश्रीहीरविजयसूरिपट्टमहोदयकारिभिः श्रीविजयसेनसूरिभिश्चिरं नन्दतात् श्रीरस्तु ।छ।

( ४५३ )

॥ द० ।' पातिसाहश्री ७ अकब्बरजलालदीनविजयराज्ये गरासिया राठोडश्री ५ प्रतापसिंघश्रीखंबायतवास्तव्यलघुनागरज्ञातीयगां बादुआसुतकुंवरजीकेन श्रीधर्मनाथप्रासादकृतः उपरिसेठपीतांबरवीरा तथा से० शिवजी बोघा गजधर विश्वकर्माज्ञातीयश्रीराजनगरवास्तव्यसूत्रधार सता सुत वीरपाळ शलाट सूत्रभाण गोरा । देवजी : संवत् १६५४ वर्षे श्रावणवदि ९ वारशनौ स्वभुजार्जितबहुद्रव्यव्ययेन श्रीकावीतीर्थे स्वपुण्यार्थं रत्नतिलका नाम्ना बावनजिनालयसहितः प्रासादः कारितः । लि । पं ज्ञानेन । श्रीः ।

( ४५४ )

॥र्द०॥ अलाई ४५ सं० १६५६ वर्षे वैशाखशुदि ७ बुधे स्तंभतीर्थवास्तव्यवृद्धनगरीयलघुशाखानागरज्ञातीय गां। अलुआसुतगांधी लाडिका भार्या पति सुत गांधी कुंवरजी गांधी धर्मदास गांधी वीरदासाभिधानैः श्रीआदिनाथपादुका कारिता प्रतिष्ठिता च सकलसूरिशिरोमणिभट्टारकश्री ५ श्रीआनंदविमलसूरिपट्टालंकारभट्टारकश्री ५ श्रीविजयदानसूरीशपदवीप्रतिष्ठित सुविहितसूरीश्वरगुणगरिष्ठसाहिश्रीश्रीअकब्बरभूपालप्रदत्तजगद्गुरुबिरुदविराजमानसमुन्मूलितवादिवृंदाभिमानतपागच्छाधिराजश्री ५ श्रीहीरविजयसूरिपट्टेन्दुसाहिश्रीअकब्बरसभाप्राप्तजयवादाप्रमवेजगद्गुरुबिरुदश्री ५ श्रीविजयसेनसूरिसार्वभूमैरिति। मंगलं।

( ४५५ )

॥ जामश्रीलक्षराजराज्ये ॥

श्रीमत्पार्श्वजिनः प्रमोदकरणः कल्याणकन्दाम्बुदो
विघ्नव्याधिहरः सुरासुरनरैः संस्तूयमानक्रमः ।
सर्पाङ्को भविनां मनोरथतरुव्यूहे वसन्तोपमः
कारुण्यावसथः कलाधरमुखो नीलच्छविः पातु वः ॥ १ ॥
क्रीडां करोत्यविरतं कमलाविलास-
स्थानं विचार्य कमनीयमनन्तशोभम् ।
श्रीउज्जयन्तनिकटे विकटाधिनाथे
हाल्लारदेशेऽवनिप्रमदाललामे ॥ २ ॥
उत्तुंगतोरणमनोहरवीतरागप्रासादपंक्तिरचनारुचिरीकृतोर्वी ।
नंद्यान्नवीननगरी क्षितिसुंदराणां वक्षःस्थले ललति सा हि ललन्तिकेव ॥ ३ ॥

सौराष्ट्रनाथः प्रणतिं विधत्ते कच्छाधिपो यस्य भयाद्बिभेति।
अर्द्धासनं यच्छति मालवेशो जीयाद्यशोजित् स्वकुलावतंसः॥४॥
श्रीवीरपट्टक्रमसंगतोऽभूद्भाग्याधिकः श्रीविजयेन्दुसूरिः।
श्रीमन्धरैः प्रस्तुतसाधुमार्गश्चक्रेश्वरीदत्तवरप्रसादः॥ ५ ॥
सम्यक्त्वमार्गो हि यशोधनाह्वो दृढीकृतो यत्सपरिच्छदोऽपि।
संस्थापितश्रीविधिपक्षगच्छः संघैश्चतुर्धा परिसेव्यमानः॥ ६ ॥
पट्टे तदीये जयसिंहसूरिः श्रीधर्मघोषः प्रमहेन्द्रसिंहः।
सिंहप्रभश्चाजितसिंहसूरिर्देवेन्द्रसिंहः कविचक्रवर्ती॥ ७ ॥
धर्मप्रभः सिंहविशेषकाह्वः श्रीमान्महेन्द्रप्रभसूरिरार्यः।
श्रीमेरुतुङ्गोऽमितशक्तिमांश्च कीर्त्यद्भुतः श्रीजयकीर्तिसूरिः॥८॥
वादिद्विपौघे जयकेशरीशः सिद्धान्तसिन्धुर्भुवि भावसिन्धुः।
सूरीश्वरः श्रीगुणसेवधिश्च श्रीधर्ममूर्तिर्मधुदीपमूर्तिः॥ ९ ॥

यस्यांघ्रिपङ्कजनिरन्तरसुप्रसन्नात्
सम्यक् फलन्ति सुमनोरथवृक्षमालाः।
श्रीधर्ममूर्तिपदपद्ममनोज्ञहंसः
कल्याणसागरगुरुर्जयताद्धरित्र्याम्॥ १० ॥

पञ्चाणुव्रतपालकः सकरुणः कल्पद्रुमाभः सतां
गांभीर्यादिगुणोज्ज्वलः शुभवतां श्रीजैनधर्मे मतिः।
द्वे काल्ये समतादरः क्षितितले श्रीओसवंशे विभुः
श्रीमल्लालणगोत्रजो वरतरोऽभूत् साहि सिंहाभिधः॥११॥

तदीयपुत्रो हरपालनामा देवाच्च नन्दोऽथ स पर्वतोऽभूत्।
वच्छुस्ततः श्रीअमरात्तु सिंहो भाग्याधिकः कोटिकलाप्रवीणः॥१२॥

श्रीमतोऽमरसिंहस्य पुत्रा मुक्ताफलोपमाः।
वर्द्धमान-चांपसिंह-पद्मसिंहा अमी त्रयः॥ १३ ॥

साहि श्रीवर्द्धमानस्य नन्दनाश्चन्दनोपमाः ।
वीराह्वो विजपालाख्यो भामो हि जगडूस्तथा ॥ १४ ॥

साहि श्री चांपसिंहस्य पुत्रः श्रीअमियाभिधः ।
तदङ्गजौ शुद्धमती रामभीमावुभावपि ॥ १५ ॥

मंत्रीशपद्मसिंहस्य पुत्रा रत्नोपमास्त्रयः ।
श्रीश्रीपाल-कुंरपाल-रणमल्ला वरा इमे ॥ १६ ॥

श्रीश्रीपालाङ्गजो जीयान्नारायणो मनोहरः ।
तदङ्गजः कामरूपः कृष्णदासो महोदयः ॥ १७ ॥

साहि श्रीकुंरपालस्य वर्ततेऽन्वयदीपकौ ।
सुसीलस्थावराख्यश्च वाघजिद्भाग्यसुन्दरः ॥ १८ ॥

[एवं] सपरिकरयुताभ्याममात्यशिरोरत्नाभ्यां साहिश्रीवर्द्धमान-पद्मसिंहाभ्यां हाल्लारदेशे नव्यनगरे जाम श्रीशत्रुशल्यात्मज श्रीजसवंतजीविजयराज्ये श्रीअंचलगच्छेशश्रीकल्याणसागरसूरीश्वराणामुपदेशनात्र श्रीशांतिनाथप्रासादादिपुण्यकृत्यं कृतं । श्रीशांतिनाथप्रभृत्येकाधिकपंचशत प्रतिमाप्रतिष्ठायुगं करापितम् । चाद्या संवत् १६७६ वैशाखशुक्ल ३ बुधवासरे द्वितीया संवत् १६७८ वैशाखशुक्ल ५ शुक्रवासरे । एवं मंत्रीश्वरश्रीवर्द्धमानपद्मसिंहाभ्यां सप्तलक्षरूप्यमुद्रिका व्ययीकृता नवक्षेत्रेषु । संवत् १६९७ मार्गशीर्षशुक्ल २ गुरुवासरे उपाध्यायश्रीविजयसागरगणेः शिष्य-सौभाग्यसागरैरलेखीयं प्रशस्तिर्मनमोहनसागरप्रसादात् ॥

( ४५६ )

सं० इलाही ४८ संवत् १६५९ वैशाखवदि ६ गुरौ श्रीगंधारबंदिरे समस्तसंघेन स्वश्रेयसे श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं च श्रीतपागच्छभट्टारकश्रीहीरविजयसूरिपट्टे मकराकर-सुधाकरभट्टारकपरंपरापुरंदरवचनचातुरीचमत्कृतचित्रसकलमेदि-नीमण्डलाखंडलसाहि श्रीअकब्बरदत्तबहुमानसमस्तसुविहितावतंस भ० परंपरापद्मिनीपद्मिनीप्राणप्रियभट्टारकश्रीविजयसेनसूरिभिः ।

( ४५७ )

॥ ई० ॥ सं० १६७७ वर्षे मार्गशिर्षे सित ५ रवौ स्तंभ-तीर्थे पार्श्वनाथबिंबं प्रतिष्ठितं तपागच्छभट्टारकश्री५ श्रीविजयदेव-सूरिभिः श्रिये गंधारबंदिरस्य ।

( ४५८ )

॥ ई० ॥ सं० १६७७ मार्गशिर्षे सित ५ रवौ गंधारबंदिर-संघेन कारितं श्रीपार्श्वनाथबिंबं प्रतिष्ठितं तपागच्छे भट्टारक श्रीविजयसेनसूरीश्वरपट्टालंकार श्रीविजयदेवसूरिभिस्सपरिकरैः ।

( ४५९ )

श्रीमुनिसुव्रतबिंबं प्रतिष्ठितं भट्टारक श्रीविजयदेवसूरिभिः सपरिकरैः ।



# राधनपुर–प्रशस्तिः ।



( ४६० )

ॐनमोऽर्हते ॥

स्वस्ति श्रियां दानविधौ सुदक्षं
सत्साधुसिद्धैः परिबद्धकक्षम् ।
सुप्तां हठात् कुण्डलिनीं विबोध्य
ध्यातं मुदेऽस्मा(*) कमिव सदास्तु ॥ १ ॥

श्रीशालिनीप्रवरधर्मविराजमानेऽ-
मानेऽत्र राधनपुरे जिनशांतिनाथः ।
श्रीशांतिकीर्त्तिसुमतिप्रतिभाप्रसादं(*)
कुर्यादखिन्नविभवस्य जनस्य नित्यं ॥ २ ॥

जयति सदागमसिंधुगर्ज्जन्नुच्चैर्नयालिकल्लोलैः ।
परिपूर्णक्रियारत्नैस्तपागणो भूतले ख्यातः(*) ॥३॥

तत्रोद्भूतसमस्तवस्तुनिकरव्यापारसत्तां मुदा-
द्वैताद्वैतविनोदगोचरगता यः मोचिवान् वादिनां ।
वादे श्रीमदकब्बरोत्तममही(*) पालस्य सत्संसदि
स श्रीमानभिजातहीरविजयसूरीशसेन्याग्रणीः ॥४॥

तस्य पटाम्बरे दीप्तिं तन्वंतः सूर्यसान्निभाः ।
श्रीमद्विजयसेना(*)ख्याः सूरयो ज्ञप्तिशालिनः ॥ ५ ॥

यैर्विहितः खलु वादः संसदि भूपस्य सभ्यदीप्तायां ।
दर्शितनिजमतापा दर्शनषड्केऽस्खलद्गतयः(*) ॥ ६ ॥

तत्पट्टशक्रहरिदद्रिविकाशभानुः
सूरीश्वरः सकललक्षणलाक्षितांगः ।
श्रीराजसागरगुरुर्वरसूरिवंशः
सर्वागमार्थकलनावि(*)धिशुद्धबुद्धिः ॥ ७ ॥

श्रीमत्सागरगच्छनायकतयैश्वर्यं यदीयं स्फुर-
त्युच्चैः सत्त्वसमाधिशीलतपसां येषां प्रभावाः क्षितौ ।
गर्ज्जंति(*)प्रतिपक्षदर्पदलने सामर्थ्यभाजः स्फुटं
वंद्यास्ते वरसूरिमन्त्रमुदिताः सद्रत्नदीपोपमाः ॥८॥

तेषां च पट्टगगने रविबिंबतुल्याः
षट्त(*)र्कतर्कदरिशीलनमुक्ततन्द्राः ।
श्रीवृद्धिसागर इति प्रथिताः प्रभावैः
सूरीश्वराः समभवन् बहुशिष्यवर्गाः ॥ ९ ॥

तत्पट्टधारकतया जग(*)ति प्रसिदाः ( द्धाः )
सिद्धा इव (व)प्रसरदुत्तममंत्रवाताः ।
सत्तर्ककाशलविहस्तितवादिवृंदाः
क्षान्त्यादिसद्गुणसमुल्लसितोरुदेहाः ॥ १०(*) ॥

लक्ष्मीसागरसूरयः समभवँस्तत्त्वप्रदीपोद्भव-
ध्यानव्यापृतिमग्नमानसतया नित्यं स्वभावस्पृशः ।
ये व्योमादिसमस्तवस्तुनिवहे(*)प्रांद्दाद(म)मुद्रानुगं
सद्वाक्यं कथयंति ते वरतराः सूरीशमन्त्रोद्धराः ॥११॥

जातस्तदीयवरपट्टधरो मुनीन्द्र-
स्तिग्मांशुतिग्मरुचिरं व(*)डितवामसौम्यः ।
कल्याणसागरगुरुर्वरसूरिवर्यो
विद्योतितप्रबलसूरिपदप्रभावः ॥ १२ ॥

सूरीश्वरःसमभिजात इह प्रसिद्ध(*)-
स्तत्पट्टपूर्वगिरिभानुसमः पृथिव्यां ।
श्रीपुण्यसागरगुरुर्बहुसिद्धमन्त्रः
शास्त्रार्थसार्थविदनुत्तरतत्त्वबोधः ॥ १३ ॥
तेषां गुरु(*)णामुपदेशमाप्य
प्रासादनिर्माणविधिः त्क(कृ)तोऽयं ।
यदीयशोभां बहुधा निरीक्ष्य
स्वर्वासिनो विस्मयमाप्नुवंति ॥ १४ ॥
श्रीमाघमा(*)सस्य शितौ तुपक्षे
भृगौ तृतीयादिवसे प्रतिष्ठां ।
संप्राप्तवानद्भुततत्त्व विद्भिः (?)
संभावितोत्तुंगयशःप्रकाशः ॥ १५ ॥

इतश्च-

श्रीमालवं(*)शीयविशालगोत्रः
श्रद्धालुतां श्रीजिनधर्मव(त)त्त्वे ।
सूराभिधानः किल संदधानो
निजं कुलं दीपयति स्म दीप्तः ॥ १६ ॥
तदीयवंशप्रथ(*)नाय जातः क्षेमाभिधानः खलु पुत्ररत्नं ।
यदीयधर्म(र्मा)र्थसमर्थतायाः श्लाघां तनोति स्म गुरुः सुराणाम॥१७॥
तद्वंशभालमु(*)कुटोपमपुत्रभावं
प्राप्तः परं सुकृतसंततिसंग्रहाग्रः ।
यो राजसागरगुरोर्मुखतः प्रपेदे
धर्मप्रबोधमतुलं जयताभिधानः* ॥ १८ ॥
तस्यान्वयेऽजनि सुतोऽभयचंद्रनामा

पुत्रैश्चतुर्भिरभितः परिशोभमानः ।
जूठा-कपूर-जसराज-सुमेघजीति
सन्नाम(*)भिः प्रथितकीर्त्तिभिरद्भुतश्रीः ॥ १९ ॥
सभ्येन झूठासुतजीवनेन सन्न्यायमार्गाप्तपवित्रलक्ष्म्या ।
युग्माधिकाविंशतियु(*)ग्मसंख्याः कारापिताः स्वाकृतयो जिनानां
सत्संगतिप्रीतिधरो समृद्धो(द्धः) कर्पूरनामा वणिजां वरेण्यः ॥
पुत्रस्त(*)दीयो सियवंतसंज्ञः संरा(रा)जमानः सुकृतप्रभावैः ॥२१॥
कारापितानि विम्बानि द्विचत्वारिंशदुद्यमात् ।
सत्पुण्यशालिना नि(*)त्यं जयवंतेन धीमता ॥ २२ ॥
प्रसिद्धिभाक्सर्वजनेषु नित्यं सन्मार्गणानां किल कल्पवृक्षः ।
वणिग्वरोऽभूज्जसराजनामा पु(*)त्रस्तदीयोऽजनि देवजीति ॥२३॥
देवजीशिशुना पुण्यशालिना सत्कलावता ।
मूलजीकेन जैनानि विंबानि निजद्र(*)व्यतः ॥ २४ ॥
द्वाविंशतिमितान्युच्चैस्तानि कारापितान्यथ ।
पादुकाः श्रीजिनेंद्राणां तथा च गुरुपादुका ॥ २५ ॥
कारा(*)पिताः संति तेन धर्मकर्मविधायिना ।
शाखसके(?) ततः साक्षात् गुरुदर्शनसत्फलाः ॥ २६ ॥
मेघजीति विविधार्थको(*)शलधारयन्नमितबुद्धिवैभवः ।
जन्मसागरतरंडसन्निभं जैनधर्मसमुपासनं व्यधात् ॥ २७ ॥
संति पुत्रास्त्रयस्तस्य(*) मोतीचंद्र इति स्फुटं ।
प्रथमोऽथ द्वितीयो सत् दानसिंहो लसद्यशाः ॥ २८ ॥
तृतीयो धनराजाख्यस्तत्त्वज्ञानामृतार्णव(:) ।
यस्यः बुद्धिस्तरीतुल्या नित्यं खेलति सद्गतिः ॥ २९ ॥
श्रीमोतीचंद्रसद्दानसिंहश्रीधनराजकाः ।
इमे काराप(*)यामासुर्बान्धवा धर्मशालिनः ॥ ३० ॥

बिंबान्यष्टादशप्रोच्चैः कान्तिकान्तानि साविनां (?) ।
कामिताधिकदत्वेन कल्पद्रु(*)क्षाधिकान्यपि ॥ ३१ ॥
कारापितैभिर्विविधप्रकारैर्विधाय संघस्य चतुर्विधस्य ।
अतुच्छवात्सल्यमुदारयुक्त्या बिंबप्रति(*)ष्ठा बहुभावपूर्वं ॥३२॥
देशस्य सर्वस्य जनान् समग्रा-
नाकार्य सादरममीभिरकारि भक्तिः ।
चतुर्विधाहारसुवस्त्रदानै(*)-
रानंदितांतःकरणाः कृतास्ते ॥ ३३ ॥
सुविज्ञप्ताः सर्वैः शुचिबहुप्रतिष्ठार्थकथकैः ।
प्रतिष्ठाया ग्रंथैः कृतपरिचयाः(*) सूरिपतयः ।
मुनीनां सद्ज्ञानश्रवणरसिकानां प्रियतमाः
समाजे लेखानां भवति खलु येषां गुणकथाः ॥३४॥
गुरुभिस्तै(*)र्मुदा शास्त्रपारगैः सत्त्वसागरैः ।
सूरीणां सेव्यतां यातैः सूरिभिः पुण्यसागरैः ॥ ३५ ॥
वस्वंबकाष्टशशिसंमितवत्सरे श्री(*)-
मत्फाल्गुने प्रवरमासि वलक्षपक्षे ।
शुक्रे सदा विजयदेवरवातिभे
लग्ने वृषे वहति मंगलमालिकाढये ॥ ३६(*) ॥
द्वितीयायां तिथौ जैनबिंबानां सुप्रतिष्ठिता ।
प्रतिष्ठा विहिता न्यासध्यानमुद्रापुरस्सरं ॥ ३७ ॥
श्रीमतः शां(*)तिनाथस्य चैत्ये सर्वाण्यपि श्रिये ।
स्थापितानि जिनेशानां बिंबानि विधिपूर्वकम् ॥ ३८ ॥
आचन्द्रार्कमिमाश्चि(*)रं चिरतरं जीयासुरुल्लासदाः
श्रीजैनेश्वरमूर्त्तयो मतिमतां मिथ्यात्वविध्वंसकाः ।

यत्रोद्द्योतितदिङ्मु(*)खाः खलु इमा तिष्ठंति सोऽपि स्वयं
प्रासादः स्थिरतां भजत्वभिमतां स्वर्णाद्रिवत्सर्वदा ॥ ३९ ॥
धात्रीतले धन्य(*) तमं सुराणामानन्दकृत् राधननामधेयं ।
पुरं सदा यत्र जिनेशधर्मो राज्यं व्यालीढतनुश्चकार । ४०(*) ॥
पुण्यसागरसूरीणां शिष्यैरमृतसागरैः ।
कृता प्रशस्तिः शस्तेयं विलसत्सर्वमंगला । श्रियः सं०

( ४६१ )

(१) सुतचाणाक्य ॥ द० ॥ मह्लं० विजयेन स्वजायासहु-
डादेव्याः मूर्ति
(२) ॥ भ्रातृ-मदन । सल्पणसीह । देवसीह प्रभृ० सपत्निका-
(३) नां मूर्तिसहिता स्वीया मूर्ति कारिता ॥ शिवमस्तु ॥
सं. १३०९ ।

( ४६२ )

(१) ॥ द० ॥ ठ० विजकुयेन स्वपितुः मह्लं० श्रीराणिगदेवस्य
मूर्ति भ्रा—
(२) ॥ तु ठ अजयसीह । सोम । संग्रामसीह । प्रभृति सक-
लत्राणां मूर्तयः
(३) ॥ तथा ठ० स्वणादेव्याः मूर्तिश्च कारयांचक्रे ॥ शिव-
मस्तु ॥ सं. १३०९ । स्वश्रेयसे ॥

( ४६३ )

श्रीब्रह्माणगच्छे श्रीजसोभद्रसूरिभूपिते स्वपितुरन्यैय-
तस्य श्रेयसे मूलप्रासादे.................................कारितः
सं. ११२४ ।

१५

( ४६४ )

सं. ११२४ श्रीब्रह्माणगच्छे श्रीजसोभद्राचार्या जसोवर्द्धनवैरसिंहजज्जकप्रभृतैः पधरिनागदेव्यो पितृमात्रोर्निमित्त कारितेयं प्रतिमा ।

( ४६५ )

ई० ॥ संवत् १३१६ वर्षे वैशाख वदि.................. श्रीब्रह्माणगच्छे श्रीमालज्ञातीय रांतयजग्रामवास्तव्यश्रेष्ठिराजडसुत व्यव० लखमाश्रेयोर्थं सुत० हरिपालेन श्रीमहावीरदेवस्य बिंबं कारितं॥ प्रतिष्ठितं श्रीविमलसूरिभिः। भद्रं भवतु॥

( ४६६ )

९ संवत् ११५७ वैशाख सुदि १० श्रीथारापद्रीयगच्छे श्रीशालिभद्रसूरौ सुभद्रासुतया ठ० रघुकया स्वात्मदुहितुः सुहवायाः श्र (श्रे)योर्थं रांतइजस्थ ॥ छ ॥ श्रीसुपार्श्वदेवबिंबं कारितमिति ॥

( ४६७ )

९ संवत् ११५७ वैशाख सुदि १० श्रीथारापद्रीयगच्छे श्रीशालिभद्रसूरौ..............................श्रेयोर्थं रांतइजस्थपार्श्वनाथबिंबं कारितमिति ॥ छ ॥

( ४६८ )

संवत् ११७० वर्षे वैशाख सुदि ७ श्रीब्रह्माणगच्छे श्रीशालिभद्राचार्येषु। गोवर्द्धन श्रावकेण निजजनश्रेयोर्थं.................मंगलं महाश्री ॥

( ४६९ )

दं०॥ संवत् १३०२ वर्षे ज्येष्ठ वदि २ गुरौ सलखणपुरे श्रीशांतिनाथदेवचैत्ये पंडितश्रीरायकीर्तिश्रेयोर्थं पंडितपासच-न्द्रेण श्रीपार्श्वनाथबिंबं सपरिकरं कारितं। मंगलं महाश्रीः छः॥

( ४७० )

०. सं० १३३० चैत्र वदि [ — ] शनौ श्रीब्रह्माणगच्छे सलषणपुरे श्रीशांतिनाथचैत्ये श्रीजगपालश्रेयोर्थं सुतगोलाकेन श्रीसुपासबिंबं कारितं। प्रतिष्ठितं श्रीजजगसूरिभि : ॥

( ४७१ )

दं० ॥ संवत १३२६ वर्षे माघ वदि २ रवौ श्रीघृत-घटीवास्तव्य श्रीश्रीमालज्ञातीय श्रे० यशोधवलांगजपितृ श्रे० वीशलश्रेयोर्थं तत्पु० कुमरपिहेन श्रीशांतिनाथबिंबं कारितं प्रतिष्ठितं श्रीनागेंद्रगच्छे श्रीसोमप्रसूरिभिः॥ छ ॥ मंगलं महाश्रीः ॥ छ ॥ छ ॥

( ४७२ )

सं० १३३० वर्षे चैत्र वदि ७ शनौ श्री ब्रह्माणगच्छे भ्रातृरत्नश्रेयोर्थं दो० पद्मेन बिंबं कारितं । प्रतिष्ठितं श्रीवीरसूरिभिः ॥

( ४७३ )

सं० १३४९ चैत्र वदि ६ रवौ श्रीब्रह्माणगच्छे श्री: श्रीमालज्ञातीय श्रे० जसवीरेण मातृश्री ——देविश्रेयसे श्रीनेमिनाथबिंबं कारितं। प्रतिष्ठितं श्रीजजगसूरिभिः ॥

( ४७४ )

सं० १३३० चैत्र वदि ७ शनौ श्रीहारीजगच्छे व्य० उदयपालसुत व्य० धणपालसुतजयपालेन लघुभ्रातृ पाता श्रेयोऽर्थं सलक्षणपुरे देवश्रीशांतिनाथचैत्ये श्रीमहावीरबिंबं कारितं प्रतिष्ठितं श्रीगुणभद्रसूरिशिष्येन ॥ छ ॥

( ४७५ )

सं० १३४७ ज्येष्ठ वदि २ श्रीब्रह्माणगच्छे श्री श्रीमालज्ञातीय.................. श्रेयोऽर्थं .......... .... ....... श्रीनेमिनाथबिंबं कारितं ॥

( ४७६ )

९ सं० १३३० वर्षे चैत्र वदि ७ शनौ सलषणपुरे श्रीश्रीमालज्ञातीय ठ० पद्मश्रेयोर्थं सुत पाल्हणेन श्रीनमिनाथबिंबं कारितं प्रतिष्ठितं श्रीवीरसूरिभिः ॥

( ४७७ )

सं० १३५५ वर्षे वैशाख वदि.......श्रीहारीजगच्छे पल्लीवालज्ञातीय श्रे० जड्नाश्रेयोऽर्थं सुत........श्रीचन्द्रप्रभबिंबं कारितं प्र० श्रीसूरिभिः ॥

( ४७८ )

सं० १३३० वर्षे चैत्र वदि ७ शनौ सलखणपुरे श्रीशांतिनाथचैत्ये श्रीश्रीमालज्ञातीय श्रे० माणिकभार्या श्रे० सोनू श्रेयोऽर्थं सुत.....................श्रीसुमतिनाथबिंबं कारितं। प्रति० श्रीब्रह्माणगच्छे श्रीवयरसेणोपाध्यायमिश्रैः ॥ छ ॥

( ४७९ )

९० ॥ संवत् १३३० वर्षे चैत्र वदि ७ शनौ श्रीब्रह्मा-णगच्छे श्रीश्रीमालज्ञातीयपितृमहणसिंहभ्रातृ.........श्रेयोर्थं सुतमूलदेवेन श्रीमहावीरबिंबं कारितं । प्रति० श्रीवीरसूरिभिः ॥ छ ॥

( ४८० )

१ सं० १३३० वर्षे चैत्र वदि ७ शनौ श्रीब्रह्माणगच्छे श्रीश्रीमालज्ञातीयपितृश्रे० महघाभ्रातृ..............योः श्रेयोर्थं सुतमहिपतिना श्रीअरनाथबिंबं कारितं ॥ प्रतिष्ठितं श्रीजज्जुगसूरिभिः ॥

( ४८१ )

संवत् १३४० वर्षे श्रीब्रह्माणगच्छे मातृरूपिणीबाइ-नाइकीबाइकपूरीमालदेविपुण्यार्थं श्रीबिंबानि कारितानि प्रति० श्रीमुनिचन्द्रसूरिभिः ।

( ४८२ )

संवत् १३४७ वर्षे श्रीब्रह्माणगच्छे मातृ रूपिणीबाइ नाइकिबाइ कपुरी मालदेविपुण्यार्थं बिंबचतुष्कं कारितं प्रति० श्रीमुनिचन्द्रसूरिभिः ॥

( ४८३ )

१ सं० १३३१ मोढज्ञातीय परी० महणाकेन निजमाता — — — जाल्हणदेवि श्रेयोऽर्थं श्रीपार्श्वनाथबिंबं कारितं ॥ प्रतिष्ठितं श्रीजाल्योधरगच्छे श्रीहरिप्रभसूरिभिः ।

( ४८४ )

ई० ॥ संवत् १३४९ वर्षे चैत्रवदि ६ रवौ मोढज्ञातीय परी० पूनासुत परी० तिहुणाकेन भ्रातृमहणाश्रेयोऽर्थं श्रीमहावीरबिंबं कारितं ॥ प्रतिष्ठितं श्रीजाल्योधरगच्छे श्रीदेवसूरिसंताने श्रीहरिभद्रसूरिशिष्यैः श्रीहरिप्रभसूरिभिः ॥शुभं भवतु॥

( ४८५ )

९० ॥ सं० १३३३ वैशाखसुदि ११ व्य० सोमाश्रेयोऽर्थं सुतव्य० खीमाकेन श्रीनेमिनाथबिंबं कारितं । प्रति। श्रीशीलभद्रसूरिभिः ॥

( ४८६ )

सं० १३३८ ज्येष्ठव २ शुक्रे ठ० वोना सु (०) सूरा वाया या (?) संसारदेव्या आत्मार्थं श्रीआदिनाथ..................

( ४८७ )

ई० ॥ संवत् १३०५ वर्षे वैशाखसुदि ५--मे श्रीब्रह्माणगच्छे सलक्षणपुरे श्रीशांतिनाथदेवचैत्ये महं० साम्वत श्रेयोऽर्थं सुतमहं० चाहडेन निजलघुभ्रातृमहं० अभयसिंहमहं० रतनविजयपाल जगपालसहितेन श्रीरिषभदेवबिंबं कारितं ॥ प्रतिष्ठितं श्रीवीरसूरिभिः ॥

( ४८८ )

सं० १३४३ वर्षे वैशाखमासे श्रीनागेन्द्रगच्छे — — कज्ञातीय ठ० पाल्हण ठ० चारिणदेवि श्रेयोऽर्थं राणसिंहेन बिंबं कारितं प्रतिष्ठितं श्रीमहेन्द्रसूरिभिः ॥

( ४८९ )

संवत् १३४३ वर्षे श्रीउकेशज्ञातीय मातृलक्ष्मीश्रेयोऽर्थं सुतविजपाल तथा वीसलवी गांगाप्रभृतिभिः बिंबं कारितं । प्र० श्रीहारीजगच्छे श्रीशीलभद्रसूरिभिः ॥

( ४९० )

सं० १३३० वर्षे चैत्रसुदि ७ शनौ सलषणपुरे श्रीशांति नाथदेवचैत्ये श्रेष्ठिजाजाश्रेयोऽर्थं सुतसींधलेन बिंबं कारापितं प्रतिष्ठितं श्रीजज्जुकसूरिभिः ॥

( ४९१ )

सं० १३३० चैत्रवदि ७ शनौ हारीजगच्छे व्य० आसपाल सुत षीमाकेन फुइ गांगश्रेयोऽर्थं श्रीनमिननाथबिंबं कारितं प्रतिष्ठितं श्रीशीलभद्रसूरिभिः ॥

( ४९२ )

सं० १३३० वर्षे चैत्रवदि ७ शनौ सलषणपुरे पिता श्रे० जेसल माता पाल्हणश्रेयोऽर्थं सुतप्रतापसिंहेन बिंबं कारापितं । प्रतिष्ठितं श्रीउदयदेवसूरिभिः ॥

( ४९३ )

दं० ॥ सं० १३३० वर्षे चैत्रवदि ७ शनौ प्राग्वाटज्ञातीय महं० राजसीह सुत महं० चाचाकेन पुत्र महं० धनसिंहश्रेयोऽर्थं श्रीसंभवनाथबिंबं कारितं प्रतिष्ठितं श्रीमुनिरत्नसूरिभिः ॥

( ४९४ )

ई० ॥ सं० १३१० वर्षे चैत्रवदि १३ गुरौ सत्लक्षणपुरे श्रीशांतिनाथचैत्ये चा--णावास्तव्य भां० ताहडसुतसिघाकेन पुत्र पद्मश्रेयोऽर्थं श्रीचन्द्रस्वामिर्बिंबं कारितं ॥ छ ॥ छ ॥ मंगलमस्तु ॥

( ४९५ )

सं० १३११ वर्षे चैत्र वदि........बुधे भिलवास्तव्यश्रीमाग्वाटज्ञातीय श्रे० वयरसिंहभार्याजयतश्रेयोऽर्थं सुतजयतसिंहेन श्री अजितनाथबिंबं कारितं ॥

( ४९६ )

१ सं० १३३० चैत्र वदि ७ शनौ सलषणपुरे श्रीशांतिनाथचैत्ये डीसावालज्ञातीयश्रे० सोभासुत ठ० भीमसीहभार्या श्रे० श्रीजाल्हणसुता ठ० मूहवपुण्यार्थं सुत ठ० साजणसीहेन श्रीशीतलनाथबिंबं कारितं प्रतिष्ठितं सूरिभिः ॥

( ४९७ )

सं० १३३० वर्षे चैत्र वदि ७ शनौ श्रीब्रह्माणगच्छे सलषणपुरे श्रीमालज्ञातीय श्रे० जसरा सुत देवधरश्रेयोऽर्थं भ्रातृज्ञाजणेन श्रीसुविधिनाथबिंबं कारितं प्रतिष्ठितं श्रीजज्जकसूरिभिः ॥

( ४९८ )

॥ ९ संवत् १३३४ वर्षे राध सुदि १० रवौ थीयारागच्छे सलषणपुरे श्रीसर्वदेवसूरि संताने श्रीश्रीमालज्ञातीय भां०...................सुत लुणसीहकेन भगिनीश्रीसूहडश्रेयोऽर्थं सुविधिनाथस्य परिकरकारितः बिंबं च कारितं ॥

९॥ सं० १३३१ वर्षे वैशाष सुदि १५ बुधे जाल्योधर-गच्छे मोढवंशे श्रे० यशोपालसुत ठ० पुनाकेन मातृमाल्हाण-श्रेयोर्थं विमलनाथबिंबं कारितं प्रतिष्ठितं श्रीहरिप्रभसूरिभिः ॥

( ४९७ )

सं० १६६६ वर्षे पो० व० ८ रवौ श्रीशंखेश्वर पार्श्वनाथ-परिकरः अहम्मदावाद वास्तव्य सा० जयतमाल भा० जीवादे-सुतपुण्यपालकेन स्वश्रेयसे कारितः प्रतिष्ठितश्च श्रीतपागच्छे भट्टारकश्रीहीरविजयसूरीश्वरपट्टोदयाचलभामनभानुसमानभट्टा-रकश्रीविजयसेनसूरीश्वरनिर्देशात् तत्शिष्यश्रीविजयदेवसूरिभिः श्रीमति राजनगरे । इति शुभम् ॥

( ४९८ )

१२३८ वर्षे माघसुदि ३ शनौ श्रीसोमप्रभसूरिभिर्जिनमातृ-पट्टिका प्रतिष्ठिता— — — — —भ्यां राजदेवारत्नाभ्यां स्वमातुः.......................................कल्याणमस्तु श्रीसंघस्य ॥

( ४९९ )

संवत् १३२६ वर्षे माघवदि २ रवौ श्रीब्रह्माणगच्छे श्री-श्रीमालज्ञातीय ..........सुतजाल्हाकेन श्रीनेमिनाथबिंबं चतु-र्विंशतिपट्टसहितं................प्रतिष्ठितं श्रीबुद्धिसागरसूरिभिः ।

( ५०० )

सं० १३२६ वर्षे माघवदि २ रवौ श्रीब्रह्माणगच्छे श्री-श्रीमालज्ञातीय................श्रेयोऽर्थं सुतजाल्हाकेन श्रीआदि-नाथबिंबं चतुर्विंशतिपट्टसहितं कारितं। प्रतिष्ठितं श्रीबुद्धिसागर-सूरिभिः । मंगलमस्तु ।

( ५०१ )

संवत् १६६२ वर्षे माघवदि १३ शनौ साणंदना श्रीसंघसमस्तनी देहरी ॥

( ५०२ )

संवत् १६६६ वर्षे पोषवदि ८ रवौ राजनगरवास्तव्यवृद्धशाखीय उसवालज्ञातीय मीठडीआगोत्रीय सा० समरसिंहभा० हंसाई सुत सा० श्रीपालकेन भा० हर्षाई द्वि० भा० सुखमदे धर्मपुत्र सा० वाघजीप्रमुखकुटुंबयुतेन उत्तराभिमुखो भद्राभिधः प्रासादः कारितः ॥ इति भद्रम् ।। छ ॥

( ५०३ )

संवत् १६६६ वर्षे पोष वदि ८ रवौ नटीपद्रवास्तव्य श्रीश्रीमालज्ञातीय वृद्धशाखीय प० जावड भा० जसमादे सुत प० जावजीकेन भा० सजरदे प्रमुखकुटुंबयुतेन स्वश्रेयसे श्रीशंखेश्वरग्रामे श्रीपार्श्वनाथमूलप्रासादे तदुत्तरस्यां भद्राभिधानः प्रासादः शतशो रूपकव्येन कारितः भव्यवृन्दैर्वंद्यमानश्चिरं जीयात् ॥

( ५०४ )

नटीपद्रवास्तव्य जावडसुत हरजी सुत कान्हाजीकेन भा० नारिमदे सुत — — — — भार्या प्रमुखकुटुंबयुतेन देवकुलिका कारितेयं ॥

( ५०५ )

ॐ। श्रीगणेसाअ(य)नमः ॥ श्रीसरस्वतीनमः। संवत् १८६८ ना वर्षे भाद्रवासुदि १० दिने वारबुधे सवाइ जेपरका साह

उत्तमचंद बालजीका रु० ५००० अंके रुपेआ पांच हजार नाणा सकाइ रोकडा मोकला ते मधे कारखाना काम कराओ एक काम चोकमांए तळीआको दुसरो देवराकी जाली तीसरो काम चोवीस तीथंगरको परघर समारो. चोथो काम बावन जेनाळाको फुटो टुटो समराओ. पांचमो काम नगारखाना खंड दोको कराओ. छट्ठो काम महाराज श्रीसंषेसरजीने यलेप कराओ. रु० ५००० अंके रुपैआ हजार पांच साहा जीवण दास गोडीदास श्रीराधणपरवाळा की मारफत गुमास्ता ३ भ्रमण हरनाराण तथा ईश्वरदास तथा मेणा टीकाराम पासे रईने परचावा छे ॥

॥ श्रीपार्श्वनाथ सत छे ॥

( ५०६ )

(1) ॥ ऐं० ॥ सं० १२९८ वैशाखवदि ३ शनौ श्रावक .......
(2) ल्हाकेन निजगुरु श्रीअजितसिंह...........
(3) मूर्तिः कारिता ॥ सित्गच्छे ॥ छ ॥

( ५०७ )

एर्दे० ॥ संवत् १५१० वर्षे कार्तिकवदी ६ सोमे श्रीभाव-डारगच्छे श्रीकालिकाचार्यसन्ताने आचार्य.............सूरिपट्टे श्रीविजयसिंहसूरि सुकवि...........

( ५०८ )

॥ एर्दे० ॥ संवत् १३८७ वर्षे श्रीपार्श्वनाथचैत्ये श्रीमडा-हडीयगच्छे श्रीचक्रेश्वराचार्यसंताने श्रीपद्मचन्द्रसूरिपट्टे श्रीजय-

देवसूरिशिष्य श्रीयशोदेवसूरिणां मूर्ति..................कारापिता प्रतिष्ठिता श्रीशांतिसूरिभिः ।

( ५०९ )

एर्द० ॥ संवत् १३४९ वर्षे चैत्रवदि ६ रवौ श्रीब्रह्माणगच्छे अरिष्टनेमिदेवजगत्यां श्रीजज्जगसूरिभिः स्वकीयगुरुभ्रातृपंडि० रतनस्य मूर्तिः कारिता प्रतिष्ठिता च शुभं भवतु ॥

पं० जसचं० । पं० वयजा । पं० वीका ।

( ५१० )

श्रीचापोत्कटवंशोद्भव महाराजश्रीवनराजगुरु श्रीनागेन्द्रगच्छे श्रीशीलगुणसूरिशिष्य श्रीदेवचंद्रसूरिमूर्तिः ।

( ५११ )

(1) एर्द ०॥ सं० १६६२ वर्षे वैशाखसुदि १५ सोमे पत्तनवास्तव्य वृद्धशाखीय प्राग्वाटज्ञातीय दो० शंकर भा० वाहलीनाम्न्याः

(2) सुत दो० कुंअरजी भ्रातृव्य दो० श्रीवंत भा० अजाई सुत दो० लालजी पुत्र रतनजी प्रमुखयुतया स्वश्रेयोर्थम् बृहत्तपा—

(3) गच्छेश शीलादिगुणधारक भ० श्रीहेमविमलसूरिपट्टभूषण भ० श्रीआणंदविमलसूरिपट्टप्रभाव—

(4) क श्रीविजयदानसूरिपट्टालंकाराणां स्ववचोरंजितश्रीअकब्बरपातिसाहविहितसर्वजीवाभयदान—

(5) प्रवर्तनश्रीशत्रुंजयादिकरमोचनादिविदितयशसां लुंपाकमतेश्च
ऋ० मेघजीनाम्नो दत्तदीक्षाणां भट्टारक—

(6) श्रीहीरविजयसूरिणां मूर्तिः का० प्र० च तत्पट्टालंकार
कारिभिः पातिसाह श्रीअकब्बरसभालब्धजयवादम—

(7) नोहारिभिः गोवृषभमहिषीमहिषवधमृतधनादानबंदिग्रहण
निवारकफुरमानधारिभिः भट्टारकश्री ६

(8) श्रीविजयसेनसूरिभिः महोपाध्यायश्रीसोमविजयगणि-
परिवृतैः पत्तनादिमहं० अत्रजीप्रमुखसकलसंघेन
वंद्यमाना चिरंनन्दतात् ॥

( ५१२ )

(1) ऍर्द०॥ संवत् १६६४ वर्षे फाल्गुनशु० ८ शनौ पत्तन-
वास्तव्य वृद्धशाखीय प्राग्वाटज्ञातीय दोसी शंक—

(2) र भा० वाहलीनाम्न्या भ्रातृव्य दो० भीवंत भा० अजा-
ईसुत दो० लालजीसुत रतनजी प्र०

(3) कुटुंबयुतया स्वश्रेयोर्थं तपागच्छाधिराजश्रीहीरविजय-
सूरिपट्टालंकारपातसा—

(4) हिश्रीअकब्बरसभालब्धजयवाद गावलीवदमाहिषीमाहिष
प्रमुखवधमृतस्वा—

(5) दाननिवारकप्रतिबोधितानेकनरेशसंप्रातीविजंयमान श्री
विजयसेनसूराश्वराणां

(6) मूर्तिः कारिता प्र० च तत्पट्टालंकारहारश्रीविजयदेवसू-
रिभिः। इति भद्रम् ॥

( ५१३ )

(1) एर्द०॥ संवत् १६६४ वर्षे फाल्गुनशु० ८ शनौ पत्तन-
वास्तव्य वृद्धशाखीय प्राग्वाटज्ञातीय दोसी शंकर भा० वा-

(2) हलीनाम्न्या भ्रातृव्य दो० श्रीवंत भा० अजाईसुत
लालजी सुत रतनजी प्रमुखकुटुंबयुतया स्वश्रेयो-

(3) र्थे तपागच्छाधिराजश्रीहीरविजयसूरिश्वरपट्टप्रभावकभट्टा-
रक श्रीश्री-

(4) श्रीविजयसेनसूरिपट्टपूर्वाचलसहस्रकरानुकारिशीलादिगु-
णगणालं-

(5) कृतगात्रभट्टारकपुरंदरसंप्रतिविजयमानयुवराजपदधारका-
चार्य-

(6) श्री५श्रीविजयदेवसूरीश्वराणां मूर्तिः कारिता प्रतिष्ठापिता
च गीतार्थैः ।

(7) मं० अबजी प्रमुखसंघभट्टारकण वंद्यमाना चिरं जीया-
दिति भद्रम् ॥०॥

( ५१४ )

(1) एर्द०॥ संवत् १७०९ वर्षे फाल्गुनशुदितृतीयायां
रविवारे तपागच्छाधिरा-

(2) जभट्टारकश्री५श्रीहीरविजयसूरिपट्टालंकारभट्टारकपातिसा-
हश्रीजहांगीर-

(3) प्रदत्त जहांगिरीमहातपाबिरुदधारकसकलसुविहितसाधु-परंपरा-

(4) पुरंदरश्रीविजयदेवसूरीश्वरे विजयिनि सति पट्टव्य-वस्थापि-

(5) तमेदपाटदेशाधिराजराणाश्रीजगत्सिंहप्रतिबोधदायक-

(6) आचार्यश्री ५ श्रीविजयसिंहसूरीश्वराणां पादुका का-रिता श्री-

(7) पत्तनवास्तव्य ओसवालज्ञातीय संघवी रता सुत सं॰ मानसिंह

(8) भार्या बा॰ माणिकदेनाम्न्या पुत्री नागबाई कल्याणबाई सा॰ उग्रसेन-

(9) सहितया श्रेयोऽर्थं प्रतिष्ठिता भाट्टारकश्रीविजयदेवसूरि निर्देशात् महो-

(10) पाध्यायश्री ५ श्रीभानुचन्द्रगणिशिष्यपंडितश्रीविवेकचन्द्र गणिभिरिति मंगलम् ॥

( ५१५ )

सं॰ १७१३ वर्षे माघशुक्ल ७ दिने श्रीतपागच्छे सार्वभौमभट्टारकश्रीविजयसेनसूरिपट्टालंकारभट्टारकश्रीविजयदे-वसूरीश्वराणां पादुका व्य॰ रामसिंह चांपसी कारिता। प्रतिष्ठिता च भट्टारकश्रीविजयप्रभसूरीन्द्रनिर्देशात् श्री-दीपसागरगणिनेति ॥

( ५१६ )

(1) सं० १४५२ वर्षे वैशाख शुदि ३ बुधे श्रीउकेशगच्छे श्रीककुदाचार्यसं-
(2) ताने श्रीककसूरीणां मूर्तिः श्रीसंघेन कारिता प्रतिष्ठिता श्रीदेवगुप्तसूरिभिः ॥

( ५१७ )

(1) संवत् १४३० वर्षे उकेशवंशे वेषटगोत्रे शा० सीधर शा० समुद्दर पु० का—
(2) — - यमा सा० हंसराज प्रभृतिभिः पुत्रैः पौत्रैः...............

( ५१८ )

(1) सं० १३३० वर्षे वैशाखसुदी ९ सोमे श्रीब्रह्माणगच्छे श्रीश्रीमालज्ञातीय ठ० सांगा भा०
(2) ठ० माल्हणीदेवी श्रेयोर्थं ठ० सांगाकेन श्रीनेमिनाथबिंबं कारापितं ठ० सांगामूर्तिः [ च कारिता प्रतिष्ठिता ] श्रीजज्जकसूरिभिः ।
(3) ठ० सांगा भा० ठ० सुजाण-

( ५१९ )

(1) [ संवत १३३० वर्षे ] वैशाख सुदी ९ सोमे श्रीब्रह्मान-गच्छे श्रीमालज्ञातीय ठ० सांगा भार्या ठ० सुजाणदेवी
(2) .... ..........ठ० ठ० जयतपाल जगमाल जसपाल प्रभृतिभिः श्रीशांतिनाथबिंबं कारापितं
(3) ................प्रतिष्ठितं श्रीजज्जगसूरिभिः ॥

( ५१९ )

(1) संवत् १३०१ वर्षे वैशाखसुदि ९ शुक्रे पूर्वमांडलिवा स्तव्य-मोढज्ञातीय-नागेंद्र........................................

(2) सुत-श्रे० जाल्हणपुत्रेण श्रे० राजुकुक्षीसमुद्भूतेन ठ आशा केन संसारासार.............................

(3) योपार्जितवित्तेन अस्मिन् महाराजश्रीवनराजविहारे निजकीर्तिवल्लीवितान...........................

(4) कारितः तथा च श्रीआशाकस्य मूर्तिरियं सुत ठ० अरि-सिंहेन कारिता प्रतिष्ठिता....................

(5) संबंधे गच्छे पंचासराविषे श्रीशीलग(गु)णसूरिसन्ताने शिष्य श्री...........

(6) देवचन्द्रसूरिभिः ॥ मंगलमहाश्रीः ॥ शुभं भवतु ॥

( ५२० )

................सुत सा० तेजपालनाम्ना भार्या अपु पुत्र सा० विद्याधर सा० लखुआ प्रमुखपरिवारयुतेन स्वश्रेयसे श्रीसुपार्श्वबिंबं कारितं प्रतिष्ठितं च श्रीतपागच्छे भ० श्रीहेम-विमलसूरिपट्टालंकार भ० श्रीआणंदविमलसूरिपट्टमुकुटमणि भ० श्रीविजयदानसूरिपट्टकोटीरहारभट्टारकश्रीहीरविजयसूरि-पद्मकराकरसुधाकरभट्टारकपरंपरापुरंदरसुविहित...............

( ५२१ )

संवत् १४२९ वर्षे माघवदि ०) सोमे श्रीकालिकाचार्य-

सन्ताने श्रीभावदेवाचार्यगच्छे श्रीविजयसिंहसूरि पट्टालंकार श्रीवीरसूरीणां मूर्तिः श्रीजिनदेवसूरिभिः प्र०

( ५२२ )

संवत् १३६१ फाल्गुणशुदि ३ गुरुवारे अद्येह श्रीसरस्वती........श्रीमच्चन्द्रकुले........वंसा(?)चार्य श्रीवर्द्धमानसंताने साध्वी मलयसुंदरी शिष्यणी बाई सुहव आत्मश्रेयसे श्रीअंबिकादेवीमूर्तिः कारापिता श्रीसोमसूरिशिष्यैः श्रीभावदेवसूरिभिः प्रतिष्ठिता ॥ छ ॥

( ५२३ )

संवत् १३४९ चैत्रवदि ६ शनौ श्रीवायटीयगच्छे श्रीजिनदत्तसूरिशिष्यपंडितश्रीअमरचंद्रमूर्तिः पं० महेंद्रशिष्यमदनचंद्राख्या(ख्येन) कारिता शिवमस्तु ॥

( ५२४ )

संवत् १३३४ वैशाखवदि ५ श्रीजिनदत्तसूरिमूर्तिः श्रीजिनेश्वरसूरिशिष्यश्रीजिनप्रबोधनसूरि...........

( ५२५ )

श्रे० जयता ।....संवत् १३३० वर्षे वैशाखसुदि १४ बुधे श्रीरामणवसहीचैत्ये श्रीमाळी...........

( ५२६ )

वायडीयगच्छे श्रीनेमिचंद्र उपाध्याय पं०........

( ५२७ )

वायडीयगच्छे श्रीऊजिल उपाध्याय पं० हेमगणि........
...नमितं ।

( ५२८ )

सं० १३७३ जेठशुदि १२ सोमे समस्तयुवराज ( ? ) पाटकसंघेन सैद्धान्तिकश्रीविनयचंद्रसूरीणां मूर्तिः कारिता प्रतिष्ठिता श्रीशुभचंद्रसूरिभिः । भद्रमस्तु ।

( ५२९ )

.......अमरादे पुत्र से० कल्याणजी नामना तपाभट्टारक-श्रीविजयदेवसूरीशपट्टप्रभाकरभट्टारकश्रीविजयसिंहसूरीणां मूर्तिः

( ५३० )

संतत् १२९४ वर्षे श्री — — — गच्छे श्रीसिद्धिसा-गरस्य संताने श्रीसिद्धसेनसूरिपट्टे श्रीदेवभद्रसूरीणां मूर्तिः श्रीमलयचंद्रसूरिशिष्यश्रीशील...........कारिता प्र०

( ५३१ )

संवत् १४३३ वर्षे आषाढसुदि १० बुधे श्रीनाणकीय-गच्छे श्रीसिद्धसेनसूरिगुरोर्मूर्तिः श्रीधर्मेश्वरसूरिभिः कारापिता शुभं ।

( ५३२ )

संवत् १६७३ वर्षे पोषकृष्णपंचमी शुक्रे श्रीपत्तननगर वास्तव्येन वृद्धशाखायां श्रीश्रीमालीज्ञातीय दो० धनजी भार्याऽ--

मग्वाईसुत दो० संतोषीकेन भार्या महजलदे प्रमुखकुटुंबयुतेन स्वश्रेयसे श्रीऋषभदेवपरिकरः कारितः प्रतिष्ठितश्च तपागच्छे भट्टारकपुरंदरभट्टारकश्रीहीरविजयसूरीश्वरशिष्यभट्टारकश्रीविजयसेनसूरीश्वरपट्टालंकारहारानुकारभट्टारकप्रभुभट्टारकश्रीविजयसेनसूरिभिरितिभद्रम् ॥

( ५३३ )

अथ शुभं संवत्सरे संवत् १७७८ वर्षे मासोत्तमश्रीभाद्रपदमासे शुक्रपक्षे ८ तिथौ रविवासरे श्रीपूज्यश्रीपासचंद्रसूरिजीनाछत्रत्रयंत्रभट्टारकश्रीनेमिचंद्रसूरिजीविजयराज्ये श्रीअणहिलपुरपत्तने समस्तश्रीसंघेन मंगलार्थं कारापिताः श्रीरस्तु॥ २ ॥

( ५३४ )

श्रीपार्श्वनाथ भीडभंजनजी संवत् १८४४ वैशाख सु० १० गुरौ श्रीबारेजावास्तव्यसमस्तसंघेन कारिता श्रीविजयलक्ष्मी सूरिभिः प्र० ।

( ५३५ )

संवत् १८८१ ना वैसाखसुदि ६ रवौ अजितनाथ (:) प्रतिष्ठित (:) भट्टारकश्रीआणंदसोमसूरिभिः तपागच्छे ।

( ५३६ )

संवत् १६६१ अलाइ ५० वर्षे श्रीअकब्बरविजयिराज्ये वैशाखवदि ११ शुक्रे ओसवालज्ञातीयनवलक्खागोत्रे सा०

टोकरभा० दया सुत बाधा भा० पार्वती पुत्ररत्न सा० पु० (?) रत्नपाल भार्या हंसाई ताभ्यां स्वपुण्याय श्रीशान्तिनाथबिंबं कारितं प्रतिष्ठितं श्रीबृहत्खरगच्छे श्रीजिनसिंहसूरयस्तत्पट्टा-लंकारश्रीजिनचंद्रसूरिभिः ॥ ह्रीँ ॥

( ५३७ )

सं० १३५६ ज्येष्ठशुदि १५ शुक्रे ठ० छाडा व्यवल्ह (?) तथा ठ० कुमारदेवीमूर्तिसमं कारिता प्रतिष्ठिता च ।

( ५३८ )

संवत् १६८१ वर्षे ज्येष्ठवदि ९ गुरुवासरे श्रीअहम्मदपु-रवास्तव्यवृद्धशाखीयडीसावालज्ञातीय सा० वीरा भार्या बाई सुहडदे पुत्रेण सा० वर्धमान — — — बाई वइजल पुत्र सा० — लजी प्रमुखकुटुंबयुतेन स्वश्रेयोऽर्थं सपरिकरं श्रीशांतिनाथबिंबं कारितं सा० श्रीशांतिदासप्रतिष्ठायां प्रति-ष्ठापितं प्रतिष्ठितं च तपागच्छे भ० श्रीविजयदेवसूरिवारके महोपाध्यायश्रीविवेकहर्षगणीनामनुशिष्यमहोपाध्यायश्रीमुक्ति-सागरगणिभिः श्रियेस्तु ॥ शुभं भवतु ॥

( ५३९ )

॥ सं० । १८५४ माघवदि ५ भौमे । श्रीविजयानंद-सूरिगच्छे बारेजानगरवास्तव्यश्रीश्रीमालि ज्ञातीयवृद्धशाखी-यसा । नानचंद सीवचंद नाम्ना पार्श्वनाथबिंबं का । श्रीविजयलक्ष्मीसूरिगच्छे प्रतिष्ठितं ।...........

( ५४० )

( 1 ) ॥ द० ॥ श्रीगणेशाय नमः ॥ स्वस्ति श्री म. जिनेन्द्राय सिद्धाय परमात्मने । धर्मतत्त्वप्रकाशाय ऋषभाय नमो नमः ॥ संवत् १७३२ वर्षे शाके १५८७ प्रवर्तमाने । वैशाखशुक्ल सप्तम्यां । गुरौ पुष्यनक्ष-

( 2 ) त्रे । श्रीमेदपाटदेशे । श्रीवृहत्तटाके श्रचि(चि)त्रकोटपति- सीसोदीयागोत्रे महाराणाश्रीजगतसिंहजी तद्वंशोद्धरण- धीरमहाराजाधिराजमहाराणाश्रीराजसिंहजी विजय- राज्ये । श्रीवृहत् ओसवालज्ञातीय

( 3 ) सीसोदीयागोत्रे सुरपुसथा( ? )वंशे संघवी श्रीतेजाजी तद्भार्या नायकदे तत्पुत्र सं० श्रीगजूजी तद्भार्या गौरीदे तत्पुत्र सं० राजाजी तद्भार्या रयणदे तयोः पुत्राश्चत्वारः प्रथमपुत्र सं० श्रीउदाजी तद्भार्या मालवदे तत्पुत्र सं० श्रीसुंदरदासजी

( 4 ) तद्भार्या सोभागदे अमृतदे तद्भ्रातृ सं० सिंघजी तद्भा० साहिबदे तत्पुत्र ऋषभदासजी द्वि० भा० सुहागदे सं० राजाजी द्वितिय पुत्र सं० दुदाजी तद्भार्ये दाडमदे जगरूपदे तत्पुत्र सं० वपूजी तद्भार्ये पारमदे बहुरंगदे सं० राजाजी तृतीय

( 5 ) पुत्र सं० देदाजी तद्भार्या सिंहरदे कर्मारदे पुत्र सुर- ताणजी तद्भार्या सुणारमदे । सं० राजाजी चतुर्थपुत्र सं० दयालदासजी तद्भार्ये सूर्यदे पाटमदे पुत्र सांवल-

दासजी तद्भार्या मृगादे समग्रपरिवारसहितौ श्रीऋषभ-
देव.......................................

(6) श्रीविजयगच्छे श्रीपूज्यकल्याणसागरसूरीन्द्रास्तत्पट्टे
श्रीपूज्यश्रीसुमतिसागरसूरिवरतत्पट्टे श्रीआचार्यश्री-
विजयसागरसूरिभिः श्रीऋषभदेवबिंबं प्रतिष्ठितं
॥ श्रीसंडेरगच्छीयभट्टारकश्रीदेवसुन्दरस्य । श्रीरस्तु ।

( ५४१ )

संवत् १६८२ वर्षे ज्येष्ठवदि ९ गुरुवासरे श्री आहिमदा-
वादनगरवास्तव्यश्रीओसवालज्ञातिय सा० सहसकिरण-
भार्यया बाई कुंअरि नाम्न्या स्वश्रेयोर्थं श्रीमुनिसुव्रतस्वामिबिंबं
कारितं सा० शांतिदासकारितप्रतिष्ठायां प्रतिष्ठावितं प्रतिष्ठितं
श्रीतपागच्छे भट्टारकश्रीविजयसेनसूरीश्वरपट्टालंकारभट्टारक-
श्रीविजयदेवसूरिवारके महोपाध्यायविवेकहर्षगणीनामनुशिष्या
( ष्यैः ) महोपाध्यायश्रीमुक्तिसागरगणिभिः ॥

( ५४२ )

संवत् १६८२ वर्षे ज्येष्ठवदि ९ गुरौ अहिमदावादनगरे
ओसवालज्ञातीय सा० श्रीशांतिदास भार्यया श्रीआदिनाथबिंबं
प्रतिष्ठापितं प्रतिष्ठितं च तपागच्छे महोपाध्यायश्रीमुक्ति-
सागर.......................

( ५४३ )

(1) द० ॥ स्वति श्रीविक्रमसंवत् १२८५ वर्षे फाल्गुणशुदि
२ रवौ । श्रीमदणाहिलपुरवास्तव्यप्राग्वाटान्वयप्रसूत ठ०

श्रीचण्डपात्मज ठ० श्रीचंडप्रसादांगज ठ० श्रीसोमतनुज-
ठ० श्रीआशाराजनन्दनेन ठ० कु—

(2) मारदेवीकुक्षीसंभूते ठ० श्रीलूणिग महं० श्रीमालदेवयो-
रनुजेन महं० श्रीतेजःपालाग्रजन्मना महामात्यश्रीवस्तु-
पालेन आत्मनः पुण्याभिवृद्धये इह श्रीतारंगकपर्वते
श्रीअजितस्वामिदेवचैत्ये श्रीआदिनाथदेवजिनबिंबालंकृत
खत्तकमिदं कारितं प्रतिष्ठितं श्रीनागेन्द्रगच्छे भट्टारक-
श्रीविजयसेनसूरिभिः ॥

( ५०१ )

ॐ ॐनमः सिद्धभ्येः ॥

आसीन्निर्वृतकान्वयेकतिलकः श्रीविष्णुसूर्यासने
श्रीमत्काम्यकगच्छतारकपथश्वेतांशुमान् विश्रुतः ।
श्रीमान् सूरिमहेश्वरः प्रशमभूः श्वेताम्बरग्रामणी
राज्ये श्रीविजयाधिराजनृपतेः श्रीपथायां पुरि ॥

ततश्च—

नाशं यातु शतं सहस्रसहितं संवत्सराणां ध्रुतं
श्यामा (मामा) भाद्रपदः स भद्रपदवीं मासः समारोहतु।
सास्यैव क्षयमेतु सोमसहिता कृष्णा द्वितिया तिथिः
पञ्चश्रीपरमेष्टिनिष्ठहृदयः प्राप्तो दिवं यत्र सः ॥

अपि च

कीर्तिर्दिकरिकान्तदन्तमुसलप्रोद्भूतकास्यक्रमं
कापि कापि हिमाद्रिभू........महीसोत्मासहासस्थितिम् ।

काप्यैरावणनागराजजनितस्पर्द्धानुबन्धोध्दुरं
भ्राम्यन्ती भुवनत्रयं त्रिपथगेवाद्यापि न श्राम्यति ॥
सं० ११०० भाद्रपदि २ चन्द्रे कल्याणकदिने प्रशस्तिरियं साधुसर्वदेवेनोत्कीर्णेति ॥



## बावरीयावाडलेखाः ॥

( ५४५ )

ई० ॥ सं० १३०० वर्षे वैशाखवदि ११ बुधे सहजिगपुरवास्तव्यपल्लीजातीय ठ० देदा भार्या फदूदेवीकुक्षिसंभूत परी० महीपाल महीचंद्र तत्सुत रतनपाल विजयपालैर्निजपूर्वज ठ० शंकरभार्यालक्ष्मीकुक्षिसंभूतस्य संघपतिसुंथिगदेवस्य निजपरिवारसहितस्य योग्यदेवकुलिकासहितश्रीमल्लिनाथबिंबं कारितं ॥ प्रतिष्ठितं चंद्रगच्छीयश्रीहरिप्रभसूरिशिष्यैः श्रीयशोभद्रसूरिभिः ॥ छ ॥ मंगलं भवतु ॥ छ ॥

( ५४६ )

संवत् १३१५ वर्षे फागुणवदि ७ शनौ अनुराधानक्षत्रे अद्येह श्रीमधुपत्यां श्रीमहावीरदेवचैत्ये प्राग्वाटज्ञातीयश्रेष्ठि आसदेवसुत श्री [आ]सपाल सुत गंधि वीवीकेन आत्मनः श्रेयोर्थे श्रीपार्श्वनाथदेवबिंब कारितं चंद्रगच्छे श्रीयशोभद्रसूरिभिः प्रतिष्ठितं ॥

( ५४७ )

ई० ॥ संवत् १२७२ वर्षे ज्येष्ठवादि २ रवौ अद्येह टिंबा-

नके मेहरराजश्रीरणसिंहप्रतिपत्तौ समस्तसंघेन श्रीमहावीरबिंबं कारितं प्रतिष्ठितं श्रीचंद्रगच्छीयश्रीशांतिप्रभसूरिशिष्यैः श्रीहरिप्रभसूरिभिः ॥ छ ॥

( ५४८ )

ई० ॥ संवत् १३४३ माघसुदि १० गुरौ गुर्जरप्राग्वाटज्ञातीय ठ० पेथडश्रेयसे तत्सुत पाल्हणेन श्रीनेमिनाथबिंबं कारितं प्रतिष्ठितं श्रीनेमिचंद्रसूरिशिष्यश्रीनयचंद्रसूरिभिः ॥



## पालणपुरलेखाः ॥

( ५४९ )

(1) ॥ ई० ॥ सं० १३५२ वर्षे फागुणशुदि १० बुधदिने सोनी आरहणसुत श्रे० साछल भार्या-

(2) ॥ सुहवदेविपुत्र मुंजालेन मातापितामूर्तिद्वयं कुटुम्बश्रेयसे कारितं ॥ छ ॥

( ५५० )

(1) ॥ ९ संवत् १३३५ वर्षे ................... श्रे० आम्बु-भार्या बीजू सु० काह्न भा० रूपमिणि सु० ऊदा भा० राज-

(2) ॥ सिरि पुत्र वीणा भा० धांधलदेवि पु० प्रतापसीह-भा० राजलदेवि तथा सुहडसीह मदनसीह तथा कडू सु० धरणि-

(3) ॥ ग भा० रांभना श्रे० धीणाकेन मातृपितृश्रेयोर्थं जिन-
युगलं कारापितं ॥ प्र० महाहडीय श्रीचक्रेश्वरसूरि-

(4) संताने श्रीसोमप्रभसूरिशिष्यश्रीवर्द्धमानसूरिभि(ः)
प्रतिष्ठितं ॥ छ ॥

( ५५१ )

(1) ई० ॥ संवत् १३०५ वर्षे आषाढवदि ७ शुक्रे सा०
वर्द्धमानसुत सा० कोहदेव सुत० सा०

(2) आसधर तथा सा० येहड सुत सा० भुवनचंद्र-
पद्मचंद्रैः समस्तकुटुंबश्रेयोर्थं श्रीअजितनाथाबिंबं कारितं।
प्रतिष्ठितं वादींद्रश्री-

(3) धर्मघोषसूरिपट्टप्रतिष्ठितश्रीदेवेंद्रसूरिक्रमायातश्रीजिनचंद्र-
सूरिशिष्यैः श्रीभुवनचंद्रसूरिभिः ॥ १ ॥

( ५५२ )

संवत् १२७४ वर्षे फाल्गुणशुदि ५ गुरौ श्री कोरंटकीय-
गच्छे श्रीककसूरिशिष्य सर्वदेवसूरीणां मूर्तिः ओसपुत्र रा०
आंबड संघपतिना कारिता श्रीककसूरिभिः प्रतिष्ठिता मंगलं
भवतु संघस्य।

( ५५३ )

संवत् १३१५ (?) वर्षे वैशाखवादि ७ गरौ (?) श्रीमदुके-
शगच्छे श्रीसिद्धाचार्यसंताने श्रीवरदेवसुत अभचंद्रेण श्रीसिद्ध-
सूरीणां मूर्तिः कारिता। श्रीककसूरि[भिः] प्रतिष्ठिता।

( ५५४ )

संवत् १३३१ वर्षे वैशाखसुदि ९ सोमे श्रीपंडेरकगच्छे श्रीयशोभद्रसूरिसंताने संघवी साढलेन समस्त कुटुंब श्रेयोर्थं श्रीकपर्दियक्षः कारापितः प्रतिष्ठितः श्रीशालिसूरिभिः ॥

( ५५५ )

.......माघसुदि १३ श्रीकोरंटकीयगच्छे नन्नाचार्य संताने चैत्ये श्रीकक्कसूरीणां शिष्येण पं०..........

( ५५६ )

॥ श्री ॥

(1) ॥ ऐं ॥ श्रीजिनाय नमः ॥ स्वस्ति श्रीमज्जिनं नत्वा ॥ प्रणम्य स्वगुरुं मुदा ॥ श्रीधर्मनाथचैत्यस्य ॥ प्रश-

(2) स्तिर्वर्ण्यते यथा ॥ १ ॥ अहम्मदाबादपुरे ॥ श्रीकंपिनी अं-गरिजबहादुरः ॥ राज्यं करोति विधिना ॥ मर्यादा-

(3) पालने निपुणः ॥ २ ॥ तद्राज्ये वास्तव्यो ॥ गुरुशाख उकेशवंशजातश्च ॥ जीवदयाधर्म्मार्थी ॥ साहः श्रीनि-

(4) हालचंद्रश्च ॥ ३ ॥ तत्पुत्रः श्रीसाहखुस्यालचंद्र ॥ स्तत्प-त्नी श्रीमाणकी धर्म्मकर्त्री ॥ तत्पुत्रः श्रीकेसरी-

(5) सिंहनामा ॥ तद्भार्या श्रीकुंवरनाम्नी प्रसिद्धा ॥ ४ ॥ तस्याः कुक्षेः रत्नतुल्यः प्रजातः ॥ श्रेष्ठी साहः-

(6) श्रीहठीसिंहनाम्ना ॥ भाग्येनैवोपार्जितं द्रव्यवृंदं ॥ भुक्तं दत्तं स्वीयहस्तेन तेन ॥ ५ ॥ अहम्मदावा-

(7) दपुरोपकंठे ॥ दिश्युत्तरस्यां कृतवाटिकायां ॥ यत्कारितं श्रीजिनबिंबवृंदं ॥ जिनेंद्रचैत्यं तु मह-

(8) न्नवीनं ॥ ६ ॥ द्वापंचाशद्देवत ॥ कुलिकामंडितं त्रिभूमिकं रम्यं ॥ मंडपयुगेन रुचिरं ॥ त्रिशिखरं का-

(9) रितं स्ववित्तैः ॥ ७ ॥ तस्मिन् जिनबिंबानां ॥ प्रासादानां तथा सुप्रतिष्ठा ॥ इह कारिता कृतेषा ॥ श्रीशां-

(10) तिसागरसूरिभिश्च ॥ ८ ॥ जातोयं गुर्ज्जरदेशे ॥ तस्माद्गु-र्ज्जरवर्णनम् ॥ क्रियते बुद्धियोगेन ॥ बुद्धि-

(11) मद्भिर्विभाव्यताम् ॥ ९ ॥ सान्निध्ये तीर्थराजो विमलगि-रिवरो यस्य चैवोज्जयंत ॥ स्तारंगस्तंभना-

(12) ख्यो गवडिपुरभवो यत्र संखेश्वरश्च ॥ यत्संधौ संस्थितोयं थितनागिरिवरो योऽर्बुदाख्यः सुधामा ॥ अन्ये

(13) नेकेपि तीर्था वरभुवि नगरे यत्र देशे प्रसिद्धाः ॥ १० ॥ श्राद्धाः कुर्वंति यस्मिन् जिनवरभुवने भक्ति-

(14) मुद्योतकर्त्री ॥ पूजां स्नात्रं च यात्रां विरचति नृकुलो भक्तिभावार्द्रचित्तः ॥ अर्हत्प्रोक्तागमानां श्रवण-

(15) मनुदिनंयात्रादानादिधर्म्माः सौंदर्य्ये कोपि देशो न भवति सदृशो गुर्ज्जरेणेह लक्ष्म्या ॥ ११ ॥ विस्तीर्णेह-

(16) ह्रात्रभिराजमार्गा ॥ उत्तुंगहर्म्यो जिनशुभ्रगेहाः ॥ पुं-
भिर्धनाढ्यैश्च तथा गुणाढ्यै ॥ रहम्मदावाद इ-

(17) तीह दृंगः ॥ १२ ॥ तस्मिन् वाणिज्यकर्तृणां ॥ मुख्या
बहुर्धिनायकः ॥ संघेशः श्रीहठीसिंहो जातः-

(18) पूर्वोपवर्णितः ॥ १३ ॥ शीलवती च गुणवती ॥ तस्य प-
थमा हि रुक्मणी भार्या ॥ हरकुमारिका चान्या

(19) ॥ पुत्रो जयसिंह इति नामा ॥ १४ ॥ हठीसिंहे गते स्वर्गे
पत्नी हरकुमारिका ॥ भर्तुर्वाक्यैः क्रिया सर्वा ॥

(20) चक्रे पूर्वोपवर्णिताम् ॥ १५ ॥ स्त्रीजातावपि संजाता ॥
धन्या हरकुमारिका ॥ पुरुषैः कर्तुमशक्यं यत् ॥

(21) तत्कार्यं साधितं तया ॥ १६ ॥ कुंकुमार्चितपत्राणि ॥
लिखितानि पुरे पुरे ॥ आगच्छंतु कृपां कृत्वा ॥ दर्श-

(22) नार्थं ममांगणे ॥ १७ ॥ तत्पत्रमाकर्ण्य च दूतवाक्यं ॥
चतुर्विधा हर्षभरास्तु संघाः ॥ अहम्मदावादपुरो-

(23) पकंठे प्राप्ताः प्रतिष्ठोत्सवमेव द्रष्टुं ॥ १८ ॥ आचार्याः
संघमुख्याश्च ॥ संघैः सह समागताः चतुर्ले ॥-

(24) क्षमिता मर्त्या ॥ मिलिता बहुदेशजाः ॥ १९ ॥ चैत्यबिंबं
प्रतिष्ठासु ॥ दानवत्पेषु सधर्म्मिणाम् ॥ सेवासु-

(25) सूरिसाधूनां ॥ बहु वित्तव्ययं कृतम् ॥ २० ॥ श्रीविक्रमा-
र्कसरदः ॥ प्रमितेषु वर्षे १९०३ एकोनविंश-

(26) तिशताधिके तृतीये ॥ शाके तु सप्तदशसंख्य १७६८ शताधिकेष्ट ॥ षष्टिप्रवर्तनमत समये सुश्री-

(27) के ॥ २१ ॥ माघे मासे शुक्लपक्षे ॥ षष्ठ्यी च भृगुवासरं ॥ कृतमाडंबरेणैव ॥ जलयात्रामहोत्सवं ॥ २२ ॥ ए-

(28) वं क्रमेण सप्तम्यां ॥ विहितं कुंभस्थापनं ॥ अष्टम्यां च नवम्यां तु ॥ नंद्यावर्तस्य पूजनं ॥ २३ ॥ दशम्यां ग्रह-

(29) दिग्पाल ॥ क्षेत्रपालादिपूजनं ॥ विंशतिस्थानपूजा च ॥ एकादश्यां तिथौ कृता ॥ २४ ॥ द्वादश्यां च कृ-

(30) तं श्राद्धैः ॥ सिद्धचक्रादिपूजनं ॥ त्रयोदश्यां विरचितं ॥ च्यवनस्य महोत्सवं ॥ २५ ॥ चतुर्दश्यां जन्मभावो ॥

(31) दिग्कुमारिभिरीरितं ॥ पूर्णिमायां कृतं मेरा ॥ विंद्राद्यैः स्नात्रकर्म च ॥ २६ ॥ माघे कृष्णे प्रतिपदि ॥ कृतं चंद्रे च-

(32) वासरे ॥ अष्टादशाभिषेकं तु ॥ द्वितीयायामथापरम् ॥२७॥ उत्सवं पाठशालायां ॥ गमनस्य कृतं वरं

(33) ॥ तृतीयायां कृतं सद्भि ॥ विवाहस्योत्सवं वरं ॥ २८ ॥ दीक्षोत्सवं चतुर्थ्यां च ॥ पंचम्यां भृगुवासरे ॥ वृषलग्ने

(34) च बिंबानां नेत्रोन्मिलनकं कृतं ॥ २९ ॥ षष्ठीतो दशमी यावत् ॥ कलशध्वजदंडयो ॥ प्रासादानां प्रतिष्ठा-

(35) च ॥ महोत्सवैः कृता वरा ॥३०॥ एकादश्यां गुरुदिने ॥ बिंबानां च प्रवेशनं ॥ स्थापना च कृता चैत्ये ॥ षा-

(36) सक्षेपसमन्विता ॥ ३१ ॥ तन्मंदिरे श्रीजिनधर्मनाथो ॥ बिंबप्रवेशस्थितमूलमूर्त्तिः ॥ स्वश्रेयोर्थं च कृता प-

(37) तिष्ठा ॥ भवे भवे मंगलकारिणीयम् ॥ ३२ ॥ इयं प्रश- स्तिश्चैत्यस्य ॥ खरतरगच्छे तु क्षेमशत्खायां ॥ महो०-

(38) श्रीहितप्रमोद ॥ जिनां कृता पं० सरूपेण ॥ ३३ ॥ इय प्रशस्ति लिखिता ॥ लेखकः विजयरामेण ॥ बनमालि-

(39) दासपुत्रेण ॥ मोडचातुर्वेदातिविप्रेणः ॥ ३४ ॥ उत्कीरितं सूत्रधारः ईसफेन रहेमानपुत्रेणः ॥ श्रीरस्तु ॥ श्रीः ॥

( ५५७ )

संवत् १८६७ ना वर्षे चैत्रसुद १५ दने संघसमस्त मलि करीने लपाव्युं छे जे हाथीपोलना चोक मध्ये कोइए देरासर करवा न पामे अने जो कदाचित् देरासर जो कोइए करावेतो तिर्थ तथा समस्त संघनो गुनि छे समस्त संघ देशावरना भेला मलीने ए रीत लपाव्युं छे ते चोकमध्ये आंबली तथा पीप- लानी साहमा दक्षण तथा उत्तर दिशे तथा पूर्व पश्चिम दशे जे कोई देरासर करावे तेने समस्त संघनो गुनहो छे । सहि छे । सं० १८६७ ना वर्षे चैत्रसुद १५ दने ॥



# प्राचीनजैनलेखसंग्रह।

# અવલોકન.

( સૂચન. )



આ સંગ્રહમાં આવેલા સમગ્ર લેખોનું, આ શિરો-લેખ નીચે, અવલોકન કરવામાં આવેલું છે. આમાં, દરેક લેખ કયાં આવેલો છે, અને તેમાં શી હકીકત સમાયલી છે તેનું સ્પષ્ટીકરણ આપવામાં આવ્યું છે. જે લેખો ઐતિહાસિક દૃષ્ટિએ વિશેષ ઉપયોગી છે અને જેમની સાથે સંબંધ ધરાવનારા ઉલ્લેખો અન્યત્ર મળી આવે છે તેમના વિષયમાં વિશેષ ઉહાપોહ પણ તત્તત્સ્થળે કરેલો છે. જે લેખોમાં ફકત નામ વિગેરે સાધારણ બબતોજ આપવામાં આવેલી છે તેમનાં સંબંધમાં, તેમનું સ્થાન આદિ જણાવીનેજ આગળ ચલાવવામાં આવ્યું છે. આ સંગ્રહમાંના બધા લેખો કોઇ એકજ સ્થાનથી પ્રાપ્ત થયેલા નથી પરંતુ જુદા જુદા પુસ્તકોમાંથી અને જુદા જુદા સજ્જનો તરફથી પ્રાપ્ત થયા છે તેથી તત્સંબંધી ઉલ્લેખ પણ, તે તે લેખના અવલોકનમાં યા ટિપ્પણમાં, કરી દીધેલ છે. આ અવલોકનનો ક્રમ, લેખોનાં સંખ્યા-અંક ( નંબર ) પ્રમાણેજ રાખવામાં આવેલો છે જેથી મૂળ લેખ ઉપર જે સંખ્યાંક આવેલો હોય, તેના વર્ણન માટે આ અવલોકનમાં પણ, તેજ સંખ્યાંક સાથેનું વૃત્તાંત જોવું જોઇએ.

# શત્રુંજય પર્વત ઉપરના લેખો.

શત્રુંજય પર્વત જૈન ધર્મમાં સૌથી મ્હોટું તીર્થ મનાય છે. તેના ઉપર સેંકડો જિનમન્દિરો અને હજારો જિનપ્રતિમાઓ સ્થાપિત છે. તીર્થની મહત્તા અને પ્રાચીનતા જોતાં તેના ઉપર જેટલા શિલાલેખો મળવા જોઇએ તેટલા મળતા નથી. કારણો ઘણાં છે. જેમાં સૌથી મ્હોટું કારણ તેના ઉપરના મંદિરોનું વારંવાર જે સ્મારકામ થાય છે, તે છે. આગળના વખતમાં ઐતિહાસિક વૃત્તાંતો તરફ લોકોનું વિશેષ લક્ષ્ય ન હોવાથી, મન્દિરોનો પુનરૂદ્ધાર કરતી વખતે તેમની પ્રાચીનતા જાળવી રાખવા તરફ બિલકુલ ધ્યાન અપાતું નહિ. તેથી શિલાલેખો વિગેરેને ઉખેડીને આડા અવળા નાંખી દેવામાં આવતા અથવા તો અયોગ્ય રીતે ભીંતો ઇત્યાદિમાં ચણી દેવામાં આવતા હતા. કેટલાક ઠેકાણે ચૂનો, સીમેંટ, યા કળી આદિ પણ આવા શિલાપટ્ટો ઉપર લગાડી દીધેલાં જોવામાં આવે છે. કર્નલ ટૉડ ના કથન પ્રમાણે, પરસ્પર એક બીજા સંપ્રદાયો પણ આપસની ઈર્ષા અને અસહિષ્ણુતાના લીધે આવા શિલાલેખોને નષ્ટ કરવામાં મ્હોટો ભાગ ભજવ્યો છે. આવાં અનેક કારણોને લીધે શત્રુંજય ઉપર બહુજ પ્રાચીન કે મહત્વના શિલાલેખોનું અસ્તિત્વ રહ્યું નથી.

મુંબઈ સરકારના આર્કિઓલૉજીકલ સર્વે તરફથી મી૦ કાઉસેન્સે ( Cousens ) ઈ. સ. ૧૮૮૮–૮૯ માં, આ પર્વત ઉપરના બધા લેખોની નકલો લીધી હતી. આ લેખોમાં, ૧૧૮ લેખો તેમને સારા ઉપયોગી જણાયા તેથી તેમણે એપીગ્રાફીઆ ઇન્ડિકા (Epigraphia indica) માં પ્રકટ કરવા માટે તેના પ્રકાશક ઉપર મોકલી આપ્યા. પ્રકાશકે, સુપ્રસિદ્ધ ઇતિહાસજ્ઞ ડૉ. જી. બુલ્હર ( Dr. G. Buhler, ) ને તેમનું સંપાદન કાર્ય સોંપ્યું. તેમણે, ધ્યાનપૂર્વક નિરીક્ષણ કરી એપીગ્રાફીઆ ઇન્ડિકાના બીજા ભાગના છઠા પ્રકરણમાં, પોતાના વક્તવ્ય સાથે, એ લેખો પ્રકટ કર્યાં છે.

ડૉ. બુલ્હરનું એ લેખોના વિષયમાં, નીચે પ્રમાણે કથન છે.

"નીચે આવેલા ૧૧૮ લેખો તથા તેમનો સાર મી. કાઉસેન્સે ૧૮૮૮–૮૯ (ઇ. સ.) માં પાલીતાણા નજીકના શત્રુંજય પર્વત ઉપર આવેલાં જૈન દેવાલયોમાંથી લીધેલા છે અને પ્રકાશકે તે મારા તરફ મોકલી આપ્યા છે. તેના બે મોટા વિભાગ પડી શકે: (૧) નં. ૧–૩૨ જેની મિતિ સંવત્ ૧૫૮૭ થી ૧૭૧૦ સુધીની છે, અને (૨) નં. ૩૩–૯૫ જેની મિતિ સંવત્ ૧૭૮૩ થી ૧૯૪૩ અગર ઇ. સ. ૧૮૮૭ સુધીની છે. બીજા વિભાગના લેખોમાંથી ઐતિહાસિક બાબતો બહુ થોડી નીકળે તેવી છે તેથી મેં અહીં આપ્યા નથી પણ તેમના ટૂંકસાર આપ્યા છે. પરંતુ નં. ૧૦૫ (આ સંગ્રહમાં નં. ૩૨) નો લેખ આખો આપ્યો છે. કારણ કે તેમાં અંચલગચ્છની હકીકત પૂરી આપી છે અને તેના વિષે હજુ સુધીમાં બહુ થોડું જાણવામાં આવ્યું છે. આ લેખો હાલના વખતના યતિઓ કેવી સંસ્કૃતનો ઉપયોગ કરે છે તેના નમૂનો રૂપે છે; તથા, જુનાં પુસ્તકો અને લેખોમાં વપરાતી મિશ્રભાષાનું મૂળ ખોળી કાઢવામાં એ સહાયભૂત થશે અને જુના જૈન વિદ્વાનો જેવા કે મેરૂતુંગ, રાજશેખર, અને જિનમંડનની ભાષાને સંસ્કૃતવ્યાકરણના નિયમો લગાડવાનું પણ સુલભ થઇ પડશે. આ લેખના ઉતારા અને નં. ૧–૩૩, તથા નં. ૧૧૮ ની નકલ ડાકટર જે૦ કિર્સ્ટે ( J. Kirste ), જે વીએના યુનવર્સીટીના પ્રાઇવેટ ડોસન્ટ ( Private Docent ) છે તેમણે તૈયાર કરી હતી, અને તેમની નીચે આપેલી ટીપો પણ તેમણે કરેલી છે.

આ ૧૧૮ લેખો માં આવેલી ઐતિહાસિક હકીકતના નીચે પ્રમાણે વિભાગ થઇ શકે :—

( ૧ ) પશ્ચિમ હિંદની રાજકીય હકીકત;

( ૨ ) જૈન સાધુઓના સંપ્રદાયો વિષેની હકીકત;

( ૩ ) જૈન શ્રાવકોના ઉપવિભાગો વિષેની હકીકત.

પહેલી બાબતને માટે નં. ૧ નો લેખ ઘણો ઉપયોગી છે; કારણ કે તેમાં ( *પં. ૧ ) ગુજરાતના ત્રણ સુલ્તાનોનાં નામ આપ્યાં છે; (૧)

---

૧. નં. ૯૬-૯૭ ની મિતિ નક્કી નથી. નં. ૯૮ તે ખરી રીતે નં. ૧૨ પછી મૂકવો જોઇએ.

* એપીગ્રાફીઆ ઇન્ડિકામાં એ બધા લેખો, શિલાપટ્ટોની પંક્તિઓના અનુસારે છાપેલા છે પરંતુ મેં આ સંગ્રહમાં, પદ્યબંધ લેખોને તો પદ્યાનુસાર અને ગદ્યલેખોને કેવલ સંલગ્ન જ આપી દીધા છે તેથી ડૉ. બુલ્હરની સૂચવેલી પંક્તિઓ પ્રમાણે ત્યાં ન જોતાં પદ્યાંક પ્રમાણે જોવું – **સંગ્રાહક.**

મહિમુદ, (૨) મદાફર, અને (૩) બાહદર. અને તેમાં કહેલું છે કે મદાફર વિક્રમ સંવત્ ૧૫૮૭ માં જીવતો હતો,* તથા ( પં. ૨ ) તેનો પ્રધાન પાન (ખાન) મઝાદખાન અગર મઝાદક ( પં. ૨૬ ) હતો. તેમાં વળી ( પં. ૮-૧૦ ) ચિત્રકૂટના ચાર રાજાઓનાં નામો પણ આપ્યાં છે—(૧) કુંભરાજ, (૨) રાજમલ્લ, (૩) સંગ્રામસિંહ, અને (૪) રત્નસિંહ. તેમાંનો છેલ્લો રાજા સં. ૧૫૮૭ માં રાજ્ય કરતો હતો ( પં. ૨૩ ). કર્મસિંહ અગર કર્મરાજ જેણે ( પં. ૨૭ ) પુંડરીક પર્વતના દેવાલયનો સપ્તમ ઉદ્ધાર કર્યો અને તેને પુનઃ બંધાવ્યું, તે, તેનો મુખ્ય પ્રધાન હતો. વિશેષમાં ( પં. ૨૬ ) એમ કહેલું છે કે તેણે સુલ્તાન બહાદુરની રજાથી એ કામ કર્યું હતું અને તેની પાસેથી તેણે એક 'સ્ફુરન્માન' એટલે કે ફરમાન મેળવ્યું હતું. મંત્રી રવ (' રવાખ્ય ') નરસિંહક+ જે ઘણું કરી જૈન હતો અને જે સુલ્તાન બહાદુરના મુખ્ય મંત્રીની નોકરીમાં હતો તેણે બાદશાહ સાથે પત્રવ્યવહાર ચલાવ્યો હતો.

ગુજરાતના રાજ્યકર્તાઓની યાદિ વિષે જણાવું જોઈએ કે સુલ્તાન બહાદુરના બે ભાઈ સુલ્તાન સિકંદર અને મહમુદ, જેમણે સુલ્તાન મુઝફર બીજા પછી થોડાં થોડાં વર્ષ રાજ્ય કર્યું, તેમનાં નામ કાઢી નાંખવામાં આવ્યાં છે. ખાન મઝાદ અગર મઝાદક જેને આપણા લેખમાં સં. ૧૫૮૭ માં બહાદુરનો વજીર કહેલો છે તે હું ઓળખી શકતો નથી.‡ મિરાત-ઇ-સિકંદરી[૨] ના પ્રમાણે ઈ. સ. ૧૫૨૬ માં તાજખાન ઉપર એ દેશકાળ એનાયત કર્યો હતો. વળી, ટૉડ ( Tod ) ના રાજસ્થાનમાં કર્મરાજ અગર કર્મસિંહનું

---

* આ કથન ભુલ ભરેલું છે લેખમાં કાંઈ તેની વિદ્યમાનતા બતાવી નથી પરંતુ બહાદુરશાહ, તેની ગાદીએ બેઠો હતો એ સૂચવવાને માટે श्रीमदाफरपट्टोद्योतकारक એમ લખવામાં આવ્યું છે.—સંગ્રાહક.

+ ડૉ. બુહ્લર ' मंत्री रवाख्यो नरसिंहकः ' ( પદ્ય ૨૭ ) એ વાક્યમાં મુંઝાણા છે અને નરસિંહ એ રવાખ્યનું વિશેષણ માની એકલા રવાનેજ મંત્રી લખ્યો છે. પરંતુ એ ભુલ છે. રવા ( યા રવીરાજ ) અને નરસિંહ બન્ને મઝાદખાનના અમાત્ય હતા. જુઓ, મ્હારો शत्रुंजयतीर्थोद्धारप्रबंध.—સંગ્રાહક.

‡ મઝાદખાન, બહાદુરનો વજીર નહિ પણ સોરઠનો સુબો હતો. જુઓ ' ગુજરાતનો અર્વાચીન ઇતિહાસ.' ( પૃ ૪૭ )—સંગ્રાહક.

૨ 'લોકલ મુહમેદન ડીનેસ્ટીઝ ઑફ ગુજરાત'—સર ઇ. સી. બેલી ( Bayley ) પૃ ૩૩૪.

નામ આવતું નથી. તોપણ આ લેખના ખરાપણા વિષે શક રાખવાની જરૂર નથી. ચાર રાણાઓની યાદી ટોડની યાદી પ્રમાણેજ છે. મિરાત–ઈ–સિકંદરી ( પૃ. ૩૫૦ ) માં કહ્યા પ્રમાણે રત્નસિંહે સંવત ૧૫૮૭ માં રાજ્ય કર્યું અને તેને ગુજરાતના સુલ્તાન સાથે મિત્રતા હતી.

ત્યાર બાદ ત્રીજા અગર ચોથા મોગલ બાદશાહોના વખતની મિતિઓ આવે છેઃ—

( ૧ ) નં. ૧૫, ૧૭—૨૦, ૨૩, ૨૪ ના લેખો જે બધા સંવત્ ૧૬૭૫ ના છે તેમાં તથા સંવત ૧૬૮૩ ના નં. ૨૭ ના લેખમાં જહાંગીરને 'નુરદીન જ૦ સવાઈ' તરીકે ઓળખાવ્યો છે. નં. ૧૭–૨૦ માં રાજકુમાર ખોસ્રૂ ( શાહિજાદા સુરતાણ ખોસરૂ ) અને સુલ્તાન ખુર્મ ( સહિયાન સુરતાણ ખુરમે ), અમદાવાદ ( રાજનગર ) ના સૂબાનાં નામો આવે છે.

( ૨ ). નં. ૩૩ નો લેખ જેની મિતિ વિક્રમ સં. ૧૬૮૬ અને શક સંવત્ ૧૫૫૧ છે તેમાં શાહજિહાન ( શાહ જ્યાહાં ) નું નામ એક વખત આવે છે. આ બે મિતિઓ બરાબર રીતે મળતી આવે છે. વળી, સુરતાણ ખુર્મ, અગર, સુલ્તાન ખુર્રમ અગર શાહજિહાન સંવત્ ૧૬૭૫ માં ગુજરાતનો સૂબો હતો તે પણ ખરૂં છે, કારણ કે મુસલમાન ઇતિહાસકારો જણાવે છે કે (અકબરે) ગુજરાત પ્રાંત ઈ. સ. ૧૬૧૭ માં મેળવ્યો હતો. શાહિજાદા સુરતાણ ખોસરૂ એટલે કે શાહજાદા ખોસ્રૂ ( નં. ૧૭—૨૦ ) જે વિક્રમ સંવત્ ૧૬૭૫ માં જીવતો હતો પણ તેના બાપના રાજ્યના બીજા વર્ષથી કેદી હતો, તેનું નામ પણ ઉપયોગી છે.

કાઠીયાવાડના જાગીરદારો વિષે તેમાં કહેલું છે કે—

( ૧ ) જામ ( યામ ) શત્રુશલ્ય તેનો પુત્ર જસવન્ત કે જેણે (નં. ૨૧, પં. ૪) નવીનપુર, એટલે કે નવાનગર, હાલ્લાર એટલે કે હાલાર પ્રાંતમાં, વિ. સં. ૧૬૭૫ માં રાજ્ય કર્યું.

( ૨ ) પાલીતાણાના કેટલાક ગોહેલ રાજાઓઃ—

( अ ). ખાંધુજી અને તેનો પુત્ર શિવાજી, ( નં. ૨૭, પં. ૩૮–૯, ) વિ. સં. ૧૬૮૩;

( ब ) ઉનડાજી, ( નં. ૫૧. ) વિ. સં. ૧૮૬૧;

( क ) ખંગારજીઃ તેનો પુત્ર નોઘણજી, અને તેનો પૌત્ર પ્રતાપ-

